( १ ) $D_6$ गूढविप्रियकारिन् ( २ ) $D_4$ explains फूत्कृत्य ( ३ ) Mg drops कुचनिहितहस्तया ( ४ ) Mg लोके दीना । $D_6$ दीनालोका हगीरिता । $D_2$ शोकादीना ( ५ ) $D_6$ explains विश्वस्येत्यनेन भवतीनां दुरुपदेशेन ईदृशीं अवस्थां प्राप्तास्मीति अयमर्थश्च गम्यते । ( ६ ) Mt drops सभयं नर्म.

नायिका सखीभिर्मानकरणाय बोधिता तद्वचनोल्लंघनभयेन कपटं विधाय मानं कृतवतीति कविराह—

**काञ्च्या गाढतरावबद्धवसनप्रान्ता किमर्थं पुन-**
**र्मुग्धाक्षी स्वपितीति तत्परिजनं स्वैरं प्रिये पृच्छति ।**
**मातः सुप्तिमपीह लुम्पति ममेत्यारोपितक्रोधया**
**पर्यस्य स्वपनच्छलेन शयने दत्तोऽवकाशस्तया ॥२०॥**

( c ) $D_4$, $D_6$, U लुम्पति ; Bm स्वप्तुमपीह वारयति मामित्याहितक्रोधया.

When the lover gently asked the servants of the beloved as to why the lovely-eyed (lady) had tightly fastened the end of her garment with her girdle and again slept, she cried out in her anger : " Ah mother ! he would not even allow me to sleep ! " and turning on her side as in sleep , made room ( for him ) in her bed. (20)

काञ्च्या मेखलया गाढतरावबद्धवसनप्रान्ता सती गाढतरं अतिदृढं अवबद्धः संयतो वसनप्रान्तश्चैलाञ्चलो यस्याः सा तथोक्ता । मुग्धाक्षी वामलोचना किमर्थं पुनः स्वपिति शेते । पुनःशब्दो वाक्यालंकारे । इति तत्परिजनं नायिकायाः परिजनं प्रिये प्राणेश्वरे स्वैरं मन्दम् । मन्दस्वच्छन्दयोः स्वैरमित्यमरः । पृच्छति सति । हे मातः हे अम्ब अस्मिन् शयने मम सुप्तिमपि निद्रामपि लुम्पति नाशयतीत्यारोपितक्रोधया एवं कल्पितकोपया तया स्वपनच्छलेन स्वप्नोद्वेगव्याजेन पर्यस्य परिवृत्य शयने पर्यङ्के अवकाशः प्रदेशो दत्तः इति संबन्धः । अत्र गाढतरावबद्धवसनप्रान्तेत्यनेन किमर्थं स्वपितीत्यनेन

च्चापराधी प्रियः तस्मिन् समागते सति नीवी दृढं बन्धनीया निद्रितयैव स्थातव्यमिति सख्युपदेशोऽवगम्यते । स्वप्नोद्वेगकल्पनयावकाशो दत्त इत्यनेन प्रेमातिशयो व्यज्यते । अत्रावहित्थं नाम संचारी भावः । नायिका स्वीया मध्या च । नायकः शठः । संभोगशृङ्गारः । अत्र कैशिकीवृत्तेरङ्गं नर्मगर्भः । युक्तिरलंकारः ।

( १ ) Mt adds परिचारकं ( २ ) $D_4$, $D_6$ लुम्पसि ( ३ ) $D_4$, $D_6$ नाशयसि $D_2$, Bm निवारयति ( ४ ) $D_6$ ॰क्रोधया ; Mt ॰रोषया ( ५ ) $D_6$ मुग्धा.

कवेर्वाक्यम् —

**एकस्मिन्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-**
**रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।**
**दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-**
**र्भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहः ॥२१॥**

Lying on the same bed with averted faces, suffering for want of response in their conversation, though the desire to placate each other lay in the heart, the couple was jealous of their prestige; but slowly their glances mingled as the eyes rolled to their corners, and their love-quarrel suddenly broke down in laughter and passionate embraces. (21)

एकस्मिन् शयने एकशय्यायां पराङ्मुखतया असंमुखतया वीतोत्तरं निर्वचनं बद्धमौनमित्यर्थः । ताम्यतोर्ग्लानिं भजतोः । किं चान्योन्यस्य इतरेतरस्य हृदि हृदये सान्त्वने स्थिते सत्यपि गौरवं गरिमाणं संरक्षतोः परिपालयतोरविनाशयतोरित्यर्थः । शनकैर्मन्दं अपाङ्गवलनात् नेत्राञ्चलव्यावर्तनात् मिश्रीभवच्चक्षुषोः सम्मीलितदृष्ट्योः । अत्र चक्षुःशब्देन दृष्टिर्लक्ष्यते । दम्पत्योर्मानकलिः मानेन प्रणयकोपेन कृतः कलिः कलहः । तथा चोक्तम् — प्रणयेर्ष्यादिभावाभ्यां मानो द्वेधा निगद्यते । तत्र प्रणयमानः स्यात् कोपोऽवहितयोर्द्वयोरिति । सहासरभसव्यावृत्तकण्ठग्रहं सहासो हाससहितः रभसेन रयेण

व्यावृत्तौ विचलितौ तौ एव कण्ठौ तयोर्ग्रहणं आलिङ्गनमित्यर्थः । सह्यसरभसव्यावृत्तकण्ठग्रहो यस्मिन्कर्मणि तत्तथोक्तम् । भग्नो ध्वस्त इति संबन्धः । अत्र भावशान्तिः, प्रणयकोपस्य शान्तत्वात् । अत्र नायिका स्वीया मध्याप्रगल्भयोरन्यतरा । नायकोऽनुकूलः । मानानन्तरसंभोगशृङ्गारः । चेष्टाकृतं सङ्केच्छारूपं शृङ्गारि नर्म । जातिरलंकारः ।

( १ ) $D_4$ परस्परस्य ( २ ) $D_4$ drops तथा चोक्तम् । ( ३ ) $D_4$ निरूपितः ( ४ ) $D_2$,$D_5$, Mt कोपावेशितया ; Bm कोपोपहितयोरपि ( ५ ) $D_6$ drops इति संबन्धः । ( ६ ) $D_1$, $D_5$ कोपभावशान्तिः.

नायकोक्तिः—

**पश्यामो मयि किं प्रपद्यत इति स्थैर्यं मयालम्बितं**
**किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।**
**इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे**
**सव्याजं हसितं मया धृतिहरो मुक्तस्तु बाष्पस्तया ॥ २२ ॥**

( d ) $D_4$,$D_5$, S, Bm बाष्पस्तु मुक्तस्तया

Because I thought to myself "I will see what she does," I assumed a serious mien ; she, too, thought to herself " Why does not this false one speak to me ?" and indulged in anger. In this predicament which promised to be entirely charming as the glances on both sides roved without any fixed aim, I laughed in a feigned manner while she let flow a stream of tears which undermined her firm will. (22)

मयि मद्विषये एषा किं प्रपद्यते किमवबुध्यते पश्यामो जानीमः इति मया स्थैर्यं स्थिरत्वमालम्बितं स्वीकृतम् । ततस्तयापि अयं खलु शठः धूर्तः। खलुशब्दो वाक्यालंकारे । मां किमिति नालपति न भाषते इति कोपः तयापि प्रियया आश्रितः प्राप्त इत्यर्थः । इत्येवमन्योन्यविलक्षदृष्टिचतुरे विलक्षा लक्ष्यशून्या चासौ दृष्टिश्च विलक्षदृष्टिः अन्योन्यस्य परस्परस्य विलक्षदृष्टिः तया चतुरं रम्यं तस्मिन्नवस्थान्तरे दशाविशेषे मया सव्याजं किमपि

व्याजीकृत्य हसितं हासः कृतः । तया तु धृतिहरो मम स्थैर्यहरो बाष्पो मुक्त इति संबन्धः । अत्र हसितमित्यनेन तद्भावपरीक्षार्थमेव मया तूष्णीं स्थितम् । तया किमिति कुप्यत इति अयमर्थो गम्यते । बाष्पो मुक्त इत्यनेन कोपभावशान्तिः । नायिका स्वीया मुग्धा च । यथोक्तं दशरूपके — मुग्धा नववयःकामा रतौ वामा मृदुः क्रुधि । इति । नायकस्तु अनुकूलः । प्रणय-मानानन्तरं संभोगैः । सहास्यं शृङ्गारि नर्म । युक्तिरलंकारः ।

( १ ) $D_1$. धैर्यहरो ( २ ) $D_3$ त्वं किमिति कुप्यसि इत्ययमर्थो। $D_4$, Mg त्वया किमिति कुप्यते इत्य० ; Bm मया किमिति कुप्यते etc. ( ३ ) $D_1$,$D_2$ संभोगशृङ्गारः.

कवेर्वाक्यम्—

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ २३ ॥

( d ) $D_4$ माभूदागत इत्यमन्द ; $D_1$, $D_2$, $D_3$, $D_4$, O, T, Mg पुनर्वीक्षितम् ।

At the utterance of the name of a rival beloved, the beautiful one, reposing on one and the same bed with her lover, suddenly turns her back on him in anger feeling wilted and notwithstanding his bland honeyings she rejects him in her excitement ; when, however , he kept quiet, she immediately turns her neck briskly and looks at him lest he should grow languid (in sleep). (23)

एकस्मिन् शयने एकशय्यायां विपक्षरमणीनामग्रहे सपत्नीनामग्रहणे सति सद्यः सपदि कोपपराङ्मुखग्लपितया कोपेन पराङ्मुखा च ग्लपिता च तया मुग्धया रमण्या प्रियतमश्चाटूनि सान्त्ववचनानि कुर्वन्नपि आवेगात् संभ्रमात् । आवेगः संभ्रमस्त्वरा इत्यमरः । अवधीरितो निरस्तो भूत्वा तत्क्षणं तूष्णीं

स्थित उदासीनोऽभूत् । अनन्तरमयं सुप्तो मा भूदिवेति नासीदिवेति । इव-शब्दो वाक्यालंकारे । अत्र मा इति प्रतिषेधे निपातः । न माङ् । माङ् भवति चेत् माङि लुङ् इत्याशीः प्रसज्येत । सा त्वत्र न युक्ता । अत्र मा इति प्रतिषेधे काकुरनुसंधेयः । अमन्दवलितग्रीवं सहसा विवर्तितकन्धरं पुनर्वीक्षितैः भूयोऽवलोकित इति संबन्धः । अत्रामन्दवलितग्रीवं पुनर्वीक्षित इत्यनेन औत्सुक्यभावस्योदयोऽवगम्यते । नायिका स्वीया मध्या च । यथोक्तं दशरूपके— मध्योद्यद्यौवनानङ्गा मोहान्तसुरतक्षमेति । नायको दक्षिणः । तुल्यो नैकेन दक्षिण इत्युक्तत्वात् । मानानन्तरं संभोगशृङ्गारः । सङ्केच्छारूपं शृङ्गारि नर्म । जातिरलंकारः ।

( १ ) $D_1$, $D_2$, $D_3$, Mt, Bm सुप्तो निद्रितो ( २ ) $D_6$ नास्तीति वेति ( ३ ) $D_1$, $D_2$, $D_3$, $D_4$, Mg, Mt पुनर्वीक्षितं भूयोऽवलोकितम् । भावे क्तः । ( ४ ) Mg, Mt तुल्योऽनेकल.

स्वापराधं विदित्वा कुपितां नायिकां पुनर्वैदग्ध्यात् प्रमोषितवतो नायकस्योक्तिः ।

**तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं**
**किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।**
**इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया**
**साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद् विस्मृतम् ॥२४॥**

( b ) S वक्षः किं ( च ? ) चरणा॰; $D_2$, $D_5$, Mg गोपायते
( d ) Mg संश्लिष्टा; S ॰वशात्तस्या च; U ॰तन्व्यापि

"Why do you conceal, under the pretext of bowing down at my feet , your chest which bears the evident marks that you have tightly pressed her twin breasts covered with thick ointment?" When this was said, I answered with the words " Where is it ? " and enfolded her most hastily into my arms in order to wipe out those traces, and the slender one in this bliss forgot what had happened. (24)

तस्यास्त्वत्प्रेयस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं सान्द्रं निबिडं विलेपनं कुङ्कुमादिचर्चा यस्य तत्तथोक्तम् । सान्द्रविलेपनं च तत् स्तनतटं च तस्य प्रश्लेषः आलिङ्गनं तेन कृता मुद्रा पदं तया अङ्कितं लाञ्छितं वक्षः चरणानतिव्यतिकरव्याजेन चरणानतेः पादप्रणामस्य व्यतिकरः संबन्धः स एव व्याजः अपदेशस्तेन किं किमर्थं गोपाय्यते प्रच्छाद्यते इति तया उक्ते सति मया तत् कर्म क्व कुत्रेति उदीर्य उक्त्वा सहसा तत् अङ्कं अङ्गरागं संप्रमार्ष्टुमपनेतुं रभसेन रयेण आश्लिष्टा आलिङ्गिता तत्सुखवशात् तदालिङ्गनसुखवशात् तन्व्या च तत्प्रकृतं कर्म विस्मृतमासीदिति संबन्धः । अत्र नायकेन रात्रावन्यतो गत्वा प्रातरागत्य तदपराधप्रमार्जनाय खण्डितायाः नायिकायाः पादप्रणामो कृतः । तदानीं तया भोगचिह्ने दृष्टे नायकः प्रत्युत्पन्नमतिः सन् एवं कृतवानित्ययमर्थो गम्यते । कोपभावशान्तिः । अत्र नायिका स्वीया मध्या च । नायकः शठः । तेन रसान्तरं नाम मानापनयनोपायः कृतः । रभसत्रासहर्षाद्यैः कोपभ्रंशो रसान्तरमित्युक्तत्वात् । मानानन्तरं संभोगः । अत्र नर्मगर्भः । युक्तिरलंकारः ।

( १ ) $D_3$,Bm सापराधं ; Mt सापराधित्वात् कुपितां ( २ ) Mt प्रमोहयतो ( ३ ) $D_4$ पादप्रणामसंबन्धच्छद्मना किं किमर्थं गोपाय्यते ( ४ ) $D_1$,$D_2$ तदङ्कनं प्रमार्ष्टुं ; $D_3$ drops अङ्कं अङ्गरागं; $D_4$ drops अङ्गरागं ( ५ ) $D_4$ हठालिङ्गनपारवश्यात् ( ६ ) $D_3$,Bm ॰च्छादनाय ( ७ ) $D_6$ तया भोगचिह्नं दृष्टम् । नायकः प्रत्युत्पन्नमतिः स एवं कृतवान् etc. ( ८ ) $D_3$ तल्लोपं ( ९ ) $D_6$ संयोगः ; $D_1$,$D_2$,Mg संभोगशृङ्गारः ।

संभोगतरलस्य नायकस्य चेष्टां कविराह—

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीणिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितवधूनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥ २५ ॥

(b) Oa, T ०भिदायिनि ; S तद्वीटिका० (c) S, Bm ०सस्मितसखीने० (d) $D_2$ ०मालीकुलः.

" Oh beautiful-eyed one, even without a bodice you manifest a heart-ravishing charm ;" as the lover, speaking these words, laid his hand on the band of her bodice, the female companions, highly pleased at the exulting eyes of their friend, who, with a smile on her face, was sitting on the edge of the bed, softly withdrew from the place, pleading (various) false excuses. (25)

हे मुग्धाक्षि वामलोचने त्वं कञ्चुलिकया कञ्चुकेन विनैव मनोहारिणीं हृद्यां लक्ष्मीं शोभां धत्से वहसीत्यभिधायिनि इति वादिनि प्रियतमे तद्वेणिकासंस्पृशि सति तस्याः कञ्चुलिकायाः वेणिकां बन्धनरज्जुं संस्पृशतीति तद्वेणिकासंस्पृक् तस्मिन् । शय्योपान्तनिविष्टसस्मितवधूनेत्रोत्सवानन्दितः शय्यायाः उपान्तः प्रान्तः तत्र निविष्टा स्मितेन सहिता सा चासौ वधूः शय्योपान्तनिविष्टा चासौ सस्मितवधूश्च तस्याः नेत्रोत्सवो नयनप्रसादः तेन आनन्दितो हृष्टः आलीजनः सखीजनः अलीकवचनोपन्यासं अलीकवचनानां अनृतवचनानामुपन्यासो यस्मिन् कर्मणि तत्तथोक्तम् । शनकैर्मन्दं निर्यातो निर्गत इति संबन्धः । अत्रौत्सुक्यं नाम संचारी भावः । नायिका स्वीया मुग्धा च । किं च स्वाधीनपतिका । यथोक्तम् —आसन्नायत्तरमणा हृष्टा स्वाधीनभर्तृका इति । नायकोऽनुकूलः । संभोगशृङ्गारः । सङ्कीर्णच्छारूपं शृङ्गारि नर्म । पर्यायोक्तिरलंकारः । यथोक्तं काव्यादर्शे —इष्टमर्थमनाख्याय साक्षात्तस्यैव सिद्धये । यत्प्रकारान्तराख्यानं पर्यायोक्तं मतं यथा ॥ इति ।

(१) $D_6$ वामनयने (२) $D_6$ वेणिबन्धनं रज्जुं (३) $D_1$, $D_3$, $D_5$, Mg अलीकः अनृतः वचनानां उपन्यासः यस्मिन् ; $D_4$ अनृतवचनानां रचना यस्मिन् कर्मणि (४) $D_6$ मध्या च ।

मानकरणाय सखीभिर्बोधिता नायिका तत्कर्तुमशक्ता सती ताः प्रत्याह—

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।

**कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते**
**दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥ २६ ॥**

(a) T ०मुद्वीक्षिता (c) U गमितोऽपि ; O तनो रोमाञ्च०

Even though the brows are wrinkled, the eyes stray, nevertheless, full of deep yearning ( towards the beloved one); even though speech is suppressed, this accursed face is lit up with a smile ; though the heart is steeled, the skin of the body begins to bristle with joy. How then, on beholding that person ( the beloved ), could this anger be sustained for long ? (26)

यस्मात् भ्रूभङ्गे भ्रुवोर्भङ्गः भ्रूभङ्गः तस्मिन् रचिते कृते सत्यपि दृष्टिर्नयनमधिकमत्यर्थं सोत्कण्ठं औत्सुक्यसहितं सत् उद्वीक्षते आलोकयति । किं च यस्माद्वाचि वचने रुद्धायां निवारितायां सत्यामपि इदं दग्धाननं हतवदनं सस्मित स्मितसहितं जायते । अत्र स्मितं नाम हास्यविशेषः । विकस्वरकपोलं यदपाङ्गोन्मुखतारकं अलक्ष्यमाणदशनं स्मितं धीरजनोचितमित्युक्तत्वात् । किं च यस्माच्चेतसि चित्ते कार्कश्यं कठिनत्वं गमिते प्रापिते सत्यपि तनुः शरीरं रोमाञ्चं रोमविक्रियां आलम्बते भजति । तस्मिन् जने प्रियतमे दृष्टे सति मानस्य ईर्ष्याकोपस्य निर्वहणं निर्वाहः कथं भविष्यति न भविष्यतीत्यर्थः । इति[2] सम्बन्धः । अपराधी प्रियस्तस्मिन् समागते भ्रूभङ्गादिकं कृत्वा मानः कर्तव्य इति सखीभिर्बोधिता नायिका भ्रूभङ्गादिके कृतेऽपि किं प्रयोजनं दृष्ट्यादिकं स्वातन्त्र्येण मानाभावं प्रकटयति इति स्वस्यासामर्थ्यं निवेदितवतीत्यभिप्रायः । हर्षो नाम संचारी भावः । नायिका स्वीया मुग्धा च । नायकः शठः । अत्रात्मोपक्षेपरूपं शृङ्गारि नर्म । आत्मोपक्षेपता नाम स्वानुरागप्रकाशनम् । जातिरलंकारः ।

(१) $D_3$ समुत्सुकं सत् (२) $D_4$ drops इति संबन्धः । (३) $D_3$ अपराधिनि मानः कर्तव्यः इति सखीभिः etc. । (४) $D_1$, $D_4$, Mg निवेदयतीत्यभिप्रायः । ; $D_2$ वेदयतीत्यभिप्रायः । (५) Bm ०युतं (६) $D_1$,$D_2$, Bm आत्मोपक्षेपो नाम ; $D_3$ आक्षेपो नाम (७) Bm ०प्रदर्शनम् ; Mg स्वानुभावप्रकाशनम्.

कवेर्वाक्यम्—

**प्राणेशप्रणयापराधसमये सख्योपदेशं विना**
**नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।**
**स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला**
**बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥ २७ ॥**

(a) S  प्राणेशप्रथमा०   (b) Bm  सखि भ्रमाङ्गवलना०

Upon the first offence against love on the part of her husband, the young wife does not understand how to express her feelings by sallies of wit, accompanied by a charming movement of her limbs, without the instructions of female friends; but with her lotus—like eyes roving, she only knows weeping so that the bright tears tumble down on the clear cheeks mixing with her fluttering locks. (27)

प्राणेशप्रणयापराधसमये प्राणेशस्य प्रियतमस्य प्रणयापराधः प्रणयेन प्रेम्णा कृतोऽपराधः अनिष्टाचरणं तस्य समये काले सख्या वयस्यया कृतमुपदेशं विना सखीकृतोपदेशाभावात् इत्यर्थः । बाला सविभ्रमाङ्गवलना सविलासगात्रपरिवर्तना सती पराङ्मुखीत्यर्थः । वक्रोक्तिसंसूचनं वक्रोक्तिभिः कुटिलभाषणैः संसूचनमपराधज्ञापनं यतो नो जानाति न वेत्ति ततः स्वच्छैः अकलुषैः अच्छकपोलमूलगलितैः निर्मलगण्डप्रान्तानिःसृतैः लुठल्लोलालकैः लुठन्तः परिवर्तमानाः लोलाश्चला अलकाश्चूर्णकुन्तला येषु तानि लुठल्लोलालकानि तैरश्रुभिर्बाष्पैः पर्यस्तनेत्रोत्पला बाष्पव्यासनेत्रोत्पला केवलं रोदित्येव रोदनमेव करोति कंचिदुपायं न जानातीत्यर्थः । इति संबन्धः । अत्र सविभ्रमाङ्गवलनेत्यनेनैकशय्याविरहो व्यज्यते । शय्याशयनेनैव अलकानां अश्रुषु लुठनं संभवति । मध्याप्रगल्भे स्वत एव कोपप्रतिकारं जानीतः । मुग्धा तु उपदेशमन्तरेण न किञ्चिज्जानातीत्यभिप्रायः । दैन्यं नाम संचारी भावः । नायिका स्वीया मुग्धा च । नायकोऽनुकूलः । प्रणयमानकृतो विप्रलम्भशृंगारः । मानकृतं चेष्टारूपं कैशिकीवृत्तेरङ्गं नर्म । जातिरलंकारः ।

( १ ) $D_4$ प्रियस्य प्रेमकृतानिष्टाचरणकाले ( २ ) $D_4$ यदा ( ३ ) $D_4$, Bm explain परिवर्तमानचूर्णकुन्तलैः। अलकाः चूर्णकुन्तला इत्यमरः। ( ४ ) $D_4$ विवर्तमाननयनेन्दीवरा भूत्वा ; $D_1$, $D_5$ Mg. drop बाष्पव्यासनेत्रोत्पला ( ५ ) $D_6$ drops इति संबन्धः ( ६ ) $D_6$ संदिशति.

अपराधिनं नायकं नायिका भर्त्सयति।

**भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां**
**तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः।**
**तव यदि तथा रूढं प्रेम प्रपन्नमिमां दशां**
**प्रकृतितरले का नः पीडा गते हतजीविते ॥ २८ ॥**

(c) $D_4$ तयाभूतं; O, Oa, Mg तदा रूढं; $D_3$ प्रसक्तं ( d ) $D_5$ हते गतजीविते.

Enough ! Now, I know ; stop this blabber, my dear, and depart. You bear not the slightest guilt , but fate is adverse to me. When your love, which was so great, has come to this pass , what pain shall I experince at the passing away of my accursed life which is by nature so fragile ? (28)

भवतु आस्तां नाम भवता यदुच्यते मयि नापराध इति तत्तथैव भवतु इत्यर्थः। विदितमेतज्ज्ञातम्। अत्र निह्नवोऽनुसंधेयः। हे प्रिय व्यर्थालापैर्निरर्थकवचनैरलं पर्याप्तम्। गम्यतां निर्गमः क्रियताम्। ते दोषः अपराधः तनुरपि स्वल्पोऽपि नास्तीति अस्माकं तु विधिर्दैवं पराङ्मुखो विमुखः प्रतिकूल इत्यर्थः। तथा रूढं तेन प्रकारेण अतिशयितं तव प्रेम इमामीदृशीं दशामवस्थां प्रपन्नं यदि प्राप्तं चेत् प्रकृतितरले स्वभावचञ्चले हतजीविते व्यर्थजीविते गते निर्याते सति नः अस्माकं का पीडा का बाधा न व्यथेत्यर्थः। इति संबन्धः। प्रेमत्यागस्त्वया क्रियते यदि मया प्राणत्यागः क्रियत इत्यनेन गम्यमानेनार्थेन इतःपरमेवं त्वया न कर्तव्यं इत्ययमर्थो व्यज्यते। नायिका स्वीया प्रगल्भा धीरा च। यथोक्तं दशरूपके – सावहित्थादरोदास्ते रतौ

धीरेतरा क्रुधा । निर्भर्त्स्य ताडयेत्कान्तं मध्याधीरेव तं वदेत् ॥ मध्याधीरा तु कीदृशी चेत् । धीरा सोत्प्रासवक्रोक्त्या मध्या साश्रु कृतागसम् । खेदयेद्दयितं कोपादधीरा परुषाक्षरम् ॥ इति । अत्र सोत्प्रासवक्रोक्त्या कोपाद्दयितं खेदयेत् इति लक्षणस्य विद्यमानत्वात् धीरा प्रगल्भैव । नायकः शठः । ईर्ष्यामानकृतो विप्रलम्भशृङ्गारः । अत्र मानकृतं शृङ्गारि नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_3$ adds आगत्य चिरकालं जात इत्यपह्नवोक्तिः । ( २ ) $D_4$ तथाभूतं; Mg तदा रूढं ( ३ ) $D_3$ अवस्थामित्युक्त्या निर्वचनोक्तिः । प्रसक्तं यदि प्राप्तं चेत् । ( ४ ) $D_4$ न कापीत्यर्थः ; Mt पीडा नास्त्येवेत्यर्थः । ( ५ ) $D_3$ स्वार्थपरा च ( ६ ) $D_1$,$D_2$,$D_3$,$D_5$ इति लक्षणस्याविद्यमानत्वात् ( ७ ) $D_1$,$D_2$,$D_3$,$D_5$, Mg, Bm, Mt. धीराधीरप्रगल्भैव ( ८ ) $D_4$ adds प्रतिषेधोक्तिराक्षेप इति लक्षणात्.

रागातिशयादनुचितवेषेणैव प्रियमभिसरन्तीं नायिकां सख्युपालभते —

**उरसि निहितस्तारो हारः कृता जघने घने**
**कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।**
**प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा**
**यदि किमधिकत्रासोत्कम्पा दिशः समुदीक्षसे ॥ २९ ॥**

( c ) T त्वयाहत॰ ( d ) O, S किमिदमधिकं ; T यदि समधिकत्रासो॰ ; $D_3$ ॰त्रासोत्कम्प.

On thy breasts , thou hast suspended a clinking string of pearls ; around thy ample hips thou hast clapped a noisy girdle ; thy feet carry sounding ornaments of precious stones ; when thou, Oh simple one, goest stealthily to thy lover with such beating of drum, why dost thou tremble with violent fear and cast glances on all sides ? (29)

उरसि वक्षसि तारो निर्मलः । मुक्ताशुद्धौ च तारः स्यादित्यमरः । हारो मुक्ताहारो निहितो विन्यस्तः । घने विपुले जघने कटिप्रदेशे कलकलवती सिञ्जितवती काञ्ची मेखला कृता रचिता निबद्धेत्यर्थः । पादौ चरणौ

च रणन्मणिनूपुरौ कृतौ रणन्तौ मणिनूपुरौ ययोस्तौ तथोक्तौ । हे मुग्धे हे मूढे त्वमेवमनेन प्रकारेण आहतडिण्डिमा प्रहतवाद्या सती निर्मलहारज्योत्स्नया भूषणरवैश्च आत्मप्रकाशनं कुर्वतीत्यर्थः । प्रियमभिसरसि यदि प्रियं प्रति कामुकी गच्छसीति चेत् अधिकत्रासोत्कम्पादुद्गतः कम्पो यस्याः सा उत्कम्पा त्रासेन उत्कम्पा । अधिकं अत्यर्थं त्रासोत्कम्पा भूत्वा दिशः ककुभः इतस्तत इत्यर्थः । किं समुदीक्षसे किमर्थं विलोकयसि इति संबन्धः । अत्र अभिसर्तुं प्रवृत्ता बाह्याङ्गणे त्रासाद्दिशोऽवलोकयन्तीं नायिकां यदृच्छया समागता सखी हे मूढे अभिसरणे एवमाहतडिण्डिमायास्तव त्रासः संभवति किमिति वक्रोक्त्या उपालभ्य तस्यास्तादृशं गमनं प्रतिषेधतीत्यभिप्रायः । अत्र शङ्का नाम संचारी भावः । यथोक्तम्— शङ्कानिष्टागमोत्प्रेक्षा विभावोऽस्या निरूप्यते । चौर्यराजापराधात्स्यादकार्याद्ग्रहणं नृणाम् ॥ अनुभावो भवत्यस्यां वैवर्ण्यं सृक्कलेहनम् । अन्योन्यादर्शने यत्नो वीक्षणं च मुहुर्दिशामित्यादि ॥ अत्र नायिका परकीयेति नाशङ्कनीयम् अभिसरणे तस्याः स्वनवद्भूषणधारणस्यायुक्तत्वाद् । किं च साधारणा न भवति । अभिसरणे त्वस्याः त्रासोत्कम्पत्वस्याभावात् । किंतु स्वीया मध्या च । ननु स्वीयाया अपि अभिसरणे स्वनवद्भूषणधारणमयुक्तमेव । सत्यमयुक्तम् । एतत्स्वनवद्भूषणधारणमभिसरणे कृतमेव न भवेत् । किंतु वासकसज्जिकावस्थायां कृतम् । यथोक्तं भारतीये— उचिते वासके या तु रतिसंभोगलालसा । मण्डनं कुरुते हृष्टा सा स्याद्वासकसज्जिका । वासोपचारेणात्यर्थं भूषणग्रहणं भवेत् । रशनानूपुरप्रायं स्वनवच्चैव यद् भवेदिति ॥ इयं प्रथमं वासकसज्जिका भूत्वा प्रिये चिरयति सति तत उत्कण्ठातिशयं प्राप्ता मदनेन मदेन प्रेर्यमाणा अज्ञानेन तथैव साभरणा अभिसर्तुं प्रवृत्ता । तथा हि— हित्वा लज्जां समाकृष्टा मदेन मदनेन च । याभिसारयते कान्तं सा भवेदभिसारिका ॥ सारयते इत्यत्र स्वार्थे ण्यन्तः । संलीना स्वेषु गात्रेषु त्रस्ता दिक्प्रेषितानना । अवगुण्ठनसंवीताभिगच्छेत्कुलजाङ्गना ॥ इत्युक्तत्वान्न दोषः । नायको दक्षिणः । अत्र सहास्यं शृङ्गारि नर्म । यथोक्तं दशरूपके—हास्येनैव सशृंगारभयेन विहितं त्रिधा । इति । आक्षेपोऽलंकारः

(१) $D_4$ प्रियाभिसरणोद्युक्तां नायिकां (२) $D_3$ adds यदृच्छयागता सखी (३) $D_3$ स्वप्रकाशं कुर्वाणा सती (४) $D_4$ अतिमात्रं (५)

$D_4$, $D_1$, Bm, Mg प्रतिषेधयती० ; $D_3$ निषेधितवती० ( ६ ) $D_3$ मुग्धा ( ७ ) $D_3$ विरमति; $D_4$, Bm चिरायति; $D_5$ चिरे याते सति

अपराधिनं नायकं कुपिता प्रिया उपालभते ।

**प्रात:प्रातरुपागतेन जनिता निर्निद्रिता चक्षुषो-**
**र्मन्दाया मम गौरवव्यपनयादुत्पादितं लाघवं ।**
**किं मुग्धेन कृतं त्वया मरणभीर्मुक्ता मया गम्यतां**
**दु:खं तिष्ठसि यच्च पथ्यमधुना कर्तास्मि तच्छ्रोष्यसि ॥३०॥**

(a) $D_4$, निर्णिद्रिता, O, Oa, T निर्निद्रिता (b) Oa ०दुत्पातितं (c) $D_1$, $D_2$, $D_4$, $D_5$, Bm, T, Mg, Mt रमणभी: (d) Mg तिष्ठतु ; $D_2$, $D_3$ तिष्ठति

Coming every day at the break of dawn, thou hast robbed my eyes of sleep ; I feel very light in my body as thou hast helped to remove the heaviness of my drooping spirits ; ( listless that I am, my sense of self-respect is lost and I am made to look small.) Innocent that you are, you have done nothing improper. I have discarded the fear of death. Now go, thou art in pain. What I would do towards my cure, that with thou hear later on. (30)

प्रात: प्रात: उषसि उषसि उपागतेन समागतेन त्वया चक्षुषोर्मम नेत्रयो: निर्निद्रिता निद्राहानिर्जनिता उत्पादिता । किं च गौरव्यपनयात् गुरुत्वनिर्हरणात् मन्दाया भाग्यहीनाया मम । मूढाल्पापटुनिर्भाग्या मन्दा: स्युरित्यमर: । लाघवं लघुत्वं उत्पादितं जनितम् । मुग्धेन अज्ञानकैतवेन त्वया किंकृतमयुक्तं किमपि नाचरितम् । इदं वाक्यमपह्नवे । किं तु मरणभी: मरणभीति: मुक्ता त्यक्ता । मयैव भयं विहाय एवमुक्तमित्यर्थ: । दु:खं संक्लेशं तिष्ठसि । गम्यतां गमनं क्रियताम् । अधुना इदानीं ते यत्पथ्यमिष्टं तत्कर्तास्मि आचरितास्मि । त्वं च श्रोष्यसि आकर्णयिष्यसि । इति संबन्ध: । अत्र यत्पथ्यं तत्कर्तास्मि इति वाक्येन गम्यमानेन मरणोद्योगसूचनेन इत:परं एवं त्वया न कर्तव्यं इति निषेधो गम्यते ।

अत्र नायिका स्वीया धीरा प्रगल्भा च । किं च खण्डिता । नायकः शठः । विप्रलम्भशृङ्गारः । सोपालम्भवचनं नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_1$, $D_2$, $D_3$ प्रियं for नायकं and नायिका for प्रिया । $D_4$ सापराधं नायकं नायिका उपालभते ( २ ) $D_1$,$D_2$,$D_5$ ॰निर्वापणात् ; $D_6$ ॰निर्हरणत्वात् ( ३ ) $D_2$,$D_4$,$D_5$,Bm,Mg,Mt रमणभीः ( ४ ) $D_1$, $D_2$,Mg दुःखं क्लेशास्तिष्ठतु ; $D_3$ दुःखं सक्लेशं तिष्ठति ( ५ ) $D_6$, Bm धीराधीरप्रगल्भा च ( ६ ) Bm किंत्वपण्डिता

नायिका स्वजीवितं प्रत्याह—

**प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं**
**धृत्या न क्षणमास्थितं व्यवसितं चित्तेन गन्तुं पुरः ।**
**यातुं निश्चितचेतसि प्रियतमे सर्वैः समं प्रस्थितं**
**गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमुत्सृज्यते ॥ ३१ ॥**

(b) $D_5$ पुनः (c) $D_3$ गन्तुं

The bracelets have left, and after them go the tears, my sweet companions, flowing incessantly; courage no longer stays behind, and my mind has resolved to wander ahead; all these depart with my beloved who is determined on leaving. If thou must depart on a journey, dear life, do not scorn the escort of thy dear friends. (31)

प्रियतमे यातुं प्रस्थातु निश्चितचेतसि सति । निश्चितं कृतनिश्चयम् । कर्तरि निष्ठा । चेतः चित्तं यस्य स तथोक्तः । तस्मिन् । वलयैः कङ्कणैः प्रस्थानं प्रयाणं कृतम् । सद्यो विरहकार्श्यात् करभूषणानि गलितानीत्यर्थः । प्रियसखैः प्रियमित्रैः अस्रैः नेत्रजलैः अजस्रं संततं गतं प्रयातम् । धृत्या धैर्येण क्षणं क्षणमात्रं न स्थितं, चित्तेन चेतसा पुरो अग्रतः गन्तुं व्यवसितं व्यवसायः कृतः । प्रियसखैरिति विशेषणं लिङ्गवचनव्यत्ययेन सर्वत्र योजनीयम् । एवं सर्वैः समस्तैः वलयादिभिः समं सह युगपदित्यर्थः । प्रास्थितं गमनं कृतम् । हे

जीवित तव गन्तव्ये गमने कर्तव्ये सति प्रियसुहृत्सार्थः प्रियाश्च सुहृदश्च प्रियसुहृदः तेषां सार्थः समूहः किमुत्सृज्यते किमर्थं परित्यज्यते त्वया तेन सह गन्तव्यामित्यर्थः । इति संबन्धः । अत्र नायिकायाः प्रियप्रयाणनिश्चयज्ञानन सद्यः समुद्भूतविरहसंतापातिशयं असहमानायाः एवं जीवितोपलम्भनेन तस्या जीवितधारणं अनिष्टमिति व्यज्यते । अत्र दैन्यं नाम संचारी भावः । अत्र नायिका स्वीया मध्याप्रगल्भयोरन्यतरा । नायकोऽनुकूलः । प्रवासविप्रलम्भशृङ्गारः । अत्र सोपालम्भवचनं नर्म । आक्षेपालंकारः ।

( १ ) Mt सद्योविरहेण देहकार्श्यात् ( २ ) $D_4$ बाष्पैः; $D_5$ अश्रुभिः ( ३ ) $D_4$ नास्थितं नावसितं; Bm, Mt नासितं नास्थितं । ( ४ ) $D_3$, Bm,Mt संतापदशातिशयं; Mg ॰विरहदशातिशयं ( ५ ) $D_6$ मुग्धाप्रगल्भयोरन्यतरा ; $D_4$ adds उदयद्यौवना मुग्धा, प्रौढा संपूर्णयौवना । ( ६ ) $D_3$ भाविप्रवास॰

नायिका प्रेमावेशकृतं स्वकीयं चापलं सख्याः पुरस्तादाह—

**सुप्तोऽयं सखि सुप्यतामिति गताः सख्यस्ततोऽनन्तरं**
**प्रेमावेशितया मया तरलया न्यस्तं मुखं तन्मुखे ।**
**ज्ञातेऽलीकनिमीलने नयनयोर्धूर्तस्य रोमाञ्चतो**
**लज्जासीन्मम तेन साप्यपहृता तत्कालयोग्यैः क्रमैः ॥ ३२ ॥**

( b ) $D_5$, O प्रेमावेशतया ; T तया तरलया

"He is asleep, now thou, too, shouldst sleep, Oh friend !" With these words the female friends depart. Thereupon I, eager that I was, and like one possessed by love, pressed my mouth against his mouth. When, however, I noticed, from the rippling of the skin of the rogue that he held his eyes closed in a feigned manner, I was seized by shame which he swept away by indulging in acts appropriate to the occasion. (32)

हे सखि अयं सुप्तः निद्रितः । त्वयापि सुप्यतां सुप्तिः क्रियतामित्युक्त्या सख्यो गताः । ततः सखीगमनानन्तरं पश्चात्प्रेमावेशितया प्रेम्ण आवेश उद्रेकः

सोऽस्याः अस्तीति प्रेमावेशिनी तस्या भावः प्रेमावेशिता तथा। त्वतलोर्गुण-वचनस्येति पुंवद्भावः। तरलया चपलया मया तन्मुखे तस्य प्रियस्य मुखे मुखं मदीयं न्यस्तं निहितम्। ततस्तस्य धूर्तस्य² वञ्चकस्य रोमाञ्चतः पुलकोद्गमात् नयनयोरलीकनिमीलने असत्यमुकुलने ज्ञाते विदिते सति मम लज्जासीत्। सा लज्जापि तेन धूर्तेनेत्यर्थः। तत्कालयोग्यैस्तत्समयोचितैः क्रमैः न्याय्यैरुपचारै-रित्यर्थः। अपह्नुता निरस्तेति संबन्धः। अभिप्रायो व्यक्त एव। औत्सुक्यं नाम संचारी भावः। नायिका स्वीया मुग्धा³ च। नायकोऽनुकूलः। संभोग-शृङ्गारः। अत्र नर्मगर्भः। युक्तिरलंकारः⁴।

(१) $D_6$ प्रेमवशीकृतं; $D_4$ प्रेमातिशयकृतं (२) $D_3$, $D_6$, Mt omit वञ्चकस्य (३) $D_6$ मुग्धा (४) Mt आक्षेपोऽलंकारः। युक्ति-रलंकारः।

नायकस्यापराधातिशयेन कुपिता नायिका वक्रोक्त्या तमाह—

**कोपो यत्र भ्रुकुटिरचना विग्रहो यत्र मौनं**
**यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः।**
**तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं**
**त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः॥ ३३॥**

(b) Mg यत्र दृष्टिः प्रसादः

O, behold, what a disaster has befallen that (former) love of ours; when a wrinkling of the brow was anger, when silence was strife, when a mutual smile was reconciliation and a glance a favour! To-day, on the other hand, you wallow at my feet and yet my wicked self cannot get rid of anger. (33)

यत्र यस्मिन्प्रेम्णि कोपोऽमर्षः भ्रुकुटिरचना भ्रूभेदकल्पनामात्रं न तु निर्भर्त्सनादिकम्। अत्र कोपशब्देन कोपकृतकर्म लक्ष्यते। यत्र यस्मिन्प्रेम्णि विग्रहो विद्वेषः मौनमभाषणमेव न तु विश्लेषः। विग्रहशब्देनापि तत्कर्म लक्ष्यते। यत्र यस्मिन्प्रेम्णि अनुनयः सान्त्वनं अन्योन्यस्मितं इतरेतरहसित-

मात्रं न सखीप्रार्थनादिकम् । यत्र यस्मिन्प्रेम्णि प्रसादः प्रसन्नता दृष्टिपातः अवलोकनमात्रं नाश्रुपातादिकम् । अत्र चतुर्थवाक्ये कविना यत्रेति शब्दः न कृतः । तदयुक्तम् । यत्र दृष्टिः प्रसाद इति वा पाठः । तस्य प्रेम्णः अधुना इदानीं वैशसं हानिः जातं उत्पन्नं तदिदं पश्यावलोकय । वैशसशब्दमेव विवृणोति । त्वमिति । त्वं पादान्ते पादप्रान्ते लुठसि परिवर्तसे पादप्रणामं करोषीत्यर्थः । तथापि खलाया दुष्टाया मे मन्युमोक्षः कोपोपशान्तिश्च न भवतीति संबन्धः । अत्र मन्युः प्रियधृष्टतानिमित्तकः । यथा भारतीये—प्रातिपक्षसकाशात्तु यः सौभाग्यप्रकाशकः । उपसर्पेत्सचिह्नश्च मन्युस्तत्रोपजायते ॥ इति । खलाया इत्यात्मनि खलत्वारोपेण प्रियस्य खलत्वं ज्ञाप्यते । मन्युमोक्षाभाव-कथनेन प्रियस्यापराधातिशयो व्यज्यते । अत्र नायिका स्वीया धीरा प्रगल्भा च । किं च खण्डिता । नायको धृष्टः । मानकृतो विप्रलम्भशृङ्गारः । ईर्ष्याक्रोधप्रायं नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_1$. $D_2$, $D_3$ अतिशयवक्रोक्त्या । ( २ ) $D_4$ रोषः ( ३ ) Mt भ्रूविक्षेपरचनामात्रं ( ४ ) $D_1$,$D_2$,$D_4$$D_5$,Bm वैश-सजननं ( ५ ) $D_4$, Mt प्रियदुष्टता० ( ६ ) Bm सौभाग्यैकविकत्थनः । ( ७ ) $D_1$,$D_3$,$D_6$ धीराधीरप्र०

कुपितां नायिकां सान्त्वयतो नायकस्य स्थितिं कविराह—

सुतनु जहिहि मौनं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥ ३४ ॥

" Break thy silence, Oh pretty one ; behold me lying at thy feet ! Never before was thy anger like this ! As the husband spoke thus,she turned her closed eyes sideways and allowed the tears to flow copiously, but no word to come to her lips. (34)

हे सुतनु हे कान्ते मौनमभाषणं जहिहि त्यज। पादानतं चरणप्रणतं मां पश्यावलोकय। तव कदाचित्कुत्रचित्कालेऽपि एवंविध ईदृशः कोपो रोषो नाभूत्खलु।[१] खलुशब्दोऽनुनये। निषेधवाक्यालंकारजिज्ञासानुनये खलु[२] इत्यमरः। इत्येवं नाथे प्राणनाथे निगदति वदति सति तिर्यगामीलिताक्ष्या तिर्यक् तिरश्चीनं यथा स्यात्तथा आमीलिते ईषन्मुकुलिते अक्षिणी नेत्रे यस्या सा तथोक्ता। तया नायिकया अनल्पं बहुलं नयनजलमश्रु मुक्तं विसृष्टम्। उक्तं भाषितं तु किंचित् ईषदपि नास्तीति संबन्धः। न खलु तव कदाचित्कोप एवंविधोऽभूदित्यनेन पूर्वमप्यनेन बहुशोऽपराद्धमिति व्यज्यते। नयनजलमनल्पं मुक्तं इत्यनेन प्रसादप्रादुर्भावः सूच्यते। तिर्यगामिलिताक्ष्येत्यनेन गम्यमानप्रसादसंवरणेन च उक्तं किंचिदित्येनन च ईर्ष्यानुवृत्तिर्व्यज्यते।[३] अत्र कोपभावशान्तिः। नायिका स्वीया मध्या[४] च। नायकः शठः। मानकृतो विप्रलम्भशृङ्गारः। अत्र नर्मस्फोटः। नर्मस्फोटस्तु भावानां सूचितोऽल्परसो लवैः इत्युक्तत्वात्। जातिरलंकारः।

(१) Mt adds शोभनाङ्गि कान्ते (२) Mt ०लंकारानुनयामन्त्रणे खलु। (३) $D_1$,$D_2$,$D_6$,Bm,Mt ईर्ष्यानिवृत्तिः (४) $D_6$ मुग्धा

नायकोक्तिः—

गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलत्काञ्चीप्रदेशाम्बरा।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥३५॥

(a) $D_1$, $D_6$ ०प्रोद्भूत०; O ०रोमोद्गमात् (c) Oa, S ०क्षराल्ला° (d) $D_6$ लीनावलीना

Her fair bosom was pressed low under the close embrace, and the skin bristled with happiness; the garment slipped off from the region (of her person) where the girdle is worn as the ardour of love rose to a pitch of intensity and she whispered weakly : 'Now do not, thou remover of my pride,

do not commit any excess, it is enough !" I wonder if she was sleeping or was dead, or sank into my heart or simply melted away ! (35)

गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा गाढालिङ्गनेन दृढाश्लेषेण वामनीकृतयोः खर्वीकृतयोः कुचयोः प्रोद्भिन्नः समुद्भूतो रोमोद्गमो रोमाञ्चो यस्याः सा तथोक्ता । सान्द्रस्नेहरसातिरेकः प्रेमप्रवाहातिशयः तेन विगलत्स्रंसमानं काञ्चिप्रदेशे अम्बरं दुकूलं यस्याः सा तथोक्ता सती निबिडप्रेमातिशयस्रंसमाननीवीति यावत् नायिका हे मानद मानं गरिमाणं द्यति खण्डयतीति मानदस्तस्य संबुद्धिः । मा मा अलमलम् । मास्म मालं च वारण इत्यमरः । अति अतिमात्रं मां प्रति मा एवं मा कुरु । अलं पर्याप्तम् । इत्यनेन प्रकारेण क्षामाक्षरोल्लापिनि पारवश्येन कृशाक्षरं यथा तथा व्याहरन्ती । अत्र मा मा इत्यादि निषेधबाहुल्यं धार्ष्ट्यात् । ततः क्रमेण पारवश्यातिशयं प्राप्ताविति तर्क्यते किमिति सुप्ता किं नु निद्रिता किंनु । किन्वित्यत्र वितर्के । मृता किन्नु मूर्च्छिता किमु । अत्र मृतिर्नाम मूर्च्छादशैव । मरणासन्ने मृतिरित्युपचर्यते । मे मनसि लीना किन्नु श्लिष्टा किन्नु विलीना किं नु द्रवीभूता किन्विति संबन्धः । मनसि मे लीना किन्नु विलीना नु किमित्यनेन वितर्कद्वयेन विनष्टबाह्यानुसंधानस्यान्तरसधानं कुर्वतो नायकस्यापि पारवश्योद्भेदोऽवगम्यते । अत्र प्रलयो नाम सात्त्विको भावः । प्रलयो नष्टचेष्टतेत्युक्तत्वात् । नायिका परकीया कन्या । यथा शाकुन्तले-मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् । मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु इति । संभोगशृङ्गारः । अत्र नर्मस्पन्दः । नर्मस्पन्दः सुखारम्भो भयान्तो नवसङ्गमे इति । जातिरलंकारः ।

( १ ) $D_1$,$D_2$,$D_6$, Mg,Bm,Mt गाढाश्लेषखर्वीकृतस्तनोद्भूतरोमाञ्चा ( २ ) $D_1$, $D_2$, $D_6$, Mg. Bm, Mt सान्द्रस्नेहरसातिरेकविगलत्काञ्चीप्रदेशाम्बरा निबिडप्रेमातिशयस्रंसमानमेखलाप्रान्तांशुका सती ( ३ ) Bm निषेधबाहुल्येन अधाष्ट्यं गम्यते ; $D_2$, Mt निषेधबाहुल्यं अधाष्ट्यात् । ( ४ ) $D_3$ कन्याया अपि प्रतिषेधोक्तिः संभवति यथा शाकुन्तले–

नवसङ्गमे लज्जाव्याकुलाया नायिकाया दशां कविराह—

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
अशक्ता चाख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥ ३६ ॥

(a) $D_3$ पटालम्बे ; $D_6$, U पटे लग्ने (c) $D_5$ न शक्ता

When the husband clings to the garment, she demurely bends her countenance; when he desires a passionate embrace, she moves her limbs aside stealthily ; she directs her glance towards her smiling friends and is unable to say anything : the newly married one suffers inwardly in shame during the first pleasantry. (36)

पत्यौ पटालग्ने[1] चैलाञ्चलग्राहिणि सति जातविनया सती । अत्र विनयशब्दः कुलपालिकाजनोचिताचारवाचकः । मुखं नमयति अवाक् करोति । हठाश्लेषं प्रसभालिङ्गनं वाञ्छति अभिलषति सति गात्राण्यङ्गानि निभृतं निश्चलं यथा भवति तथा अपहरत्याकर्षति । आख्यातुमेन निवारयेति वक्तुमशक्ता अक्षमा सती स्मितमुखसखीदत्तनयना भवति स्मितयुक्तं मुखं यासां ताः तथोक्ताः ताश्च ताः सख्यः तासु दत्ते विन्यस्ते नयने नेत्रे यया सा तथोक्ता । एवं प्रथमपरिहासे आद्यनर्मव्यापारे नववधूर्नवोढा ह्रिया लज्जया अन्तः अन्तरङ्गे ताम्यति ग्लानिं भजति इति संबन्धः[2] । अत्राभिप्रायो व्यक्त एव । व्रीडा नाम संचारी भावः । तथा चोक्तं[3]— चेतःसंकोचनं व्रीडा मुखरागस्तथादिभिरिति । नायिका स्वीया मुग्धा[4] च । नायकोऽनुकूलः । संभोगशृङ्गारः । सेङ्गेच्छारूपं[5] शृङ्गारि नर्म । जातिरलंकारः ।

(१) $D_3$ पटालम्बे (२) $D_4$ drops इति संबन्धः (३) found in $D_4$ only (४) Mg मध्या (५) $D_6$ संगेच्छा नाम शृङ्गारि नर्म

कवेर्वाक्यम —

नापेतोऽनुनयेन यः प्रियसुहृद्वाक्यैर्न यः संहृतो
यो दीर्घं दिवसं विषह्य हृदये यत्नात्कथंचिद् धृतः।
अन्योन्यस्य हृते मुखे विहितयोस्तिर्यक् कथंचिद् दृशोः
संभेदे सपदि स्मितव्यतिकरे मानो विहस्योज्झितः ॥ ३७ ॥

(c) $D_2$, $D_4$ मुखे हृते ; $D_6$, U निहितयो०

Not mollified by conciliatory words, not given up at the request of dear friends, the sense of resentment was somehow nursed in the heart during the whole of the tedious day; but when their sidelong glances, somehow resting upon their mutually averted faces, met together in smiling encounter, they laughed aloud and forgot their resentment. (37)

यो मानः अनुनयेन प्रार्थनया सखीनामिति शेषः। नापेतः नापगतः। किं च यः प्रियसुहृद्वाक्यैः प्रियस्य सुहृदः प्रियसुहृदः तेषां वाक्यैर्वचनैर्न संहृतः न समापितः। यो दीर्घमायतं दिवसं दिनम्। कालाध्वनोरत्यन्तसंयोग इति द्वितीया। विषह्य सहित्वा यत्नात् प्रयत्नात् हृदये हृदि कथंचिद् धृतः कृच्छ्रेण धारितः। स मानः अन्योन्यस्य परस्परस्य मुखे वदने हृते आकृष्टे पराकृते सति इत्यर्थः। कथंचित् केनापि प्रकारेण तिर्यक् तिरश्चीनं यथा भवति तथा विहितयोः कृतयोः दृशोः दृष्ट्योः संभेदे सङ्गमे सति स्मितव्यतिकरे स्मितस्य ईषद्धासितस्य व्यतिकरे संबन्धे सति उभयोर्मुखविकासे सतीत्यर्थः। सपदि सद्यो विहस्य हासं कृत्वा मानः प्रणयकोपः उज्झितो विसृष्ट इति संबन्धः। अत्र कोपभावशान्तिः। नायिका स्वीया मध्या च। नायकोऽनुकूलः। मानानन्तरं संभोगशृङ्गारः। चेष्टाकृतं सङ्केच्छारूपं शृङ्गारि नर्म। जातिरलंकारः।

(१) $D_4$ explains प्रियसंबन्धिबन्धुवचनैः न संहृतः (२) $D_4$ समाहितः (३) $D_3$ परावृत्ते ; $D_4$ अवाक्कृते ; Bm अपाकृते ; Mg पराकृष्टे (४) $D_6$ निहितयोः ; Bm हितयोः (५) $D_4$ explains

मन्दहास्यसंबन्धे सति  ( ६ ) $D_1$, $D_2$, $D_6$ परिहृतः  ( ७ ) $D_3$ अत्र कोपभावशान्तिसूचको हासः ।  ( ८ ) $D_6$, Bm मुग्धा

प्रियेण परिभूता नायिका स्वकीयां दशां सख्याः पुरस्तादाह—

**गते प्रेमावेशे प्रणयबहुमाने विगलिते**
**निवृत्ते सद्भावे जन इव जने गच्छति पुरः ।**
**तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसान्**
**न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥ ३८ ॥**

(b) $D_3$ प्रणयिनि जने  (c) $D_2$ गतांस्तांस्तु

Dear frien l, when the ardour of love has abated, when the high regard springing out of affection has vanished, when the friendly feeling is no longer evident, and when he, the beloved of my heart, moves before my very eyes like a (perfect) stranger : I call to my mind that humiliating experience and look back on the days that are no more and wonder that my heart is not yet broken into a hundred fragments. (38)

हे प्रियसखि प्रेमावेशे रागोद्रेके गते सति ततः प्रणयबहुमाने प्रणयेन प्रेम्णा कृतो बहुमानः आदरः प्रणये सति यादृशो बहुमानः क्रियते तादृश इत्यर्थः । तस्मिन् विगलिते विनष्टे सति तदनन्तरं सद्भावे सौजन्ये निवृत्ते अपयाते सति तदानीं जने तस्मिञ्जने जन इव सामान्यजन इव पुरः अग्रतः गच्छति व्रजति सति तत् प्रियकृतमवमानं च गतान् यातान् दिवसांश्च येषु दिवसेषु सुखेनोषितं तान् दिवसानित्यर्थः । उत्प्रेक्ष्योत्प्रेक्ष्य स्मृत्वा स्मृत्वा च मम हृदयं शतधा बहुप्रकारेण न दलति न भिद्यते इति यत् अत्र को हेतुः किं वा कारणमिति न जाने नावगच्छामि इति संबन्धः । अत्र गते प्रेमावेशे इत्यादिवाक्यचतुष्टयेन क्रमेण प्रेम्णो ह्रासोऽवगम्यते । अत्र निर्वेदो नाम संचारी भावः । तथोक्तं – दुःखेर्ष्यातत्त्वबोधादेर्निर्वेदो निष्फलत्वधीः । तत्र चिन्ताश्रुनिश्वासदीनताः संभवन्ति चेति । अत्र नायिका साधारणा । चित्रै-हेतुरलंकारः ।

( १ ) $D_3$, $D_4$, $D_5$ ०वाक्यचतुष्टयक्रमेण ; $D_1$, $D_2$ ०वाक्यचतुष्टये क्रमेण ( २ ) found only in $D_4$ ( ३ ) $D_1$, $D_2$, हेतुरलंकारः

कवेर्वाक्यम् ।

चिरविरहिणोरुत्कण्ठार्त्या श्लथीकृतगात्रयो—
नवमिव जगज्जातं भूयश्चिरादभिनन्दतोः ।
कथमपि दिने दीर्घे याते निशामधिरूढयोः
प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः ॥ ३९ ॥

(a) $D_2$, $D_5$ ०रुत्कण्ठार्तिश्लथी० (b) Mg. ०दभिनन्दिनोः (d) Oa, S यथा च तथा रतिः ।

Pining in separation for a long time, their limbs weakened by the aching of intense longing, a young couple greet each other again and again after a long time and the world appears to them as new-born ; and after the long day has somehow drawn to its close, and it is to them already night, their conversation continues without abatement, but not so their love-play. (39)

चिरविरहिणोश्चिरकालवियुक्तयोरुत्कण्ठार्त्या उत्कण्ठया औत्सुक्येन कृता आर्तिः पीडा तया श्लथीकृतगात्रयोरवसादितशरीरयोर्भूयः पुनरभिनन्दतोः संतुष्यतोः समागमेनेति शेषः । यूनोः युवतिश्च युवा च युवानौ । पुमांस्त्रियेत्येकशेषः । तयोः चिराद् बहुकालात् जगद् भुवनं नवं नूतनमिव जातमुत्पन्नम् । ततो दीर्घे आयते दिने अहनि कथमपि कृच्छ्रेण याते सति । अत्र दिनस्य दीर्घताप्रतिपत्तिर्गुरुसन्निधिवशादन्योन्यसंभाषणाद्यभावेनेत्यवगन्तव्यम् । निशां रात्रिमधिरूढयोस्तयोर्बह्वी बहुला कथा संलापः यथा येन प्रकारेण प्रसरति प्रवर्तते तथा तेन प्रकारेण रतिः रतं न प्रसरतीति संबन्धः । चिरात्सङ्गतयोर्विरहिणोः परस्परक्लेशसंकथनं रतेरपि सुखावहमित्यभिप्रायः । हर्षो नाम संचारी भावः । नायिका स्वीया मध्या च । नायकोऽनुकूलः । प्रवासानन्तरं संभोगशृङ्गारः । जातिरलंकारः ।

( १ ) $D_4$ औत्सुक्यकृतव्यथया तदुक्तं - सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते । तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदुरिति । ( २ ) $D_4$ कृशीकृतशरीरयोः ( ३ ) $D_4$ adds यद्वा भूयः समागमे सति चिराज्जगन्नवमिव जातमभिनन्दतोः । ( ४ ) $D_3$ सुरतं; $D_4$ निधुवनं ( ५ ) $D_4$ adds अत्र चेष्टवस्तुलाभात् हर्षो etc. ( ६ ) $D_6$ मुग्धा च.

कवेर्वाक्यम् —

**दीर्घा वन्दनमालिका विरचिता दृष्टचैव नेन्दीवरैः**
**पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः ।**
**दत्तः स्वेदमुचा पयोधरभरेणार्घ्यो न कुम्भाम्भसा**
**स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥४०॥**

( a ) Oa, S दीर्घा तोरणमालिका; $D_6$, U दीर्घा चन्दनमालिका ( c ) $D_4$ दत्तं; $D_4$ अर्घ्यं; $D_1$, $D_5$, $D_6$, Oa • भरेणार्घो

With her eyes, and not with blue lotuses was made the garland stretching long over the entrance ; with her smiles and not with Kunda and Jasmine and other flowers, was strewn the flower-offering; with the pair of breasts dripping with the dew of perspiration was made the respectful offering of water and not by water carried in a jar : the slender one, with the parts of her own body, prepared a solemn reception for her lover as he entered ( the house ). (40)

दीर्घा आयता वन्दनमालिका तोरणस्रक् दृष्टयैव रचिता निर्मिता इन्दीवरैः नीलोत्पलैः न विरचिता । पुष्पाणां कुसुमानां प्रकरः प्रक्षेपः स्मितेन हसितेन रचितः कृतः कुन्दजात्यादिभिः कुसुमविशेषैर्नो न कृतः । आचारार्थं गृहाङ्गणेषु पुष्पोपहारः क्रियते । अर्घ्यं उपचारविशेषः । स्वेदमुचा स्वेदं मुञ्चतीति स्वेदमुक् तेन पयोधरभरेण कुचभारेण दत्तो वितीर्णः कुम्भाम्भसा कलशोदकेन न दत्तः । एवं तन्व्या नायिकया विशतः देशान्तरादागत्य गृहप्रवेशं कुर्वतः प्रियस्य स्वैः स्वकीयैरवयवैरङ्गैरेव मङ्गलं कल्याणं कृतमिति संबन्धः । ( देशान्तरात् प्रिये आगते सति नायिकाया

अत्यादराद् दृष्टिः हर्षोदयात् अत्यंतस्मितं च सात्त्विकस्वेदोदयश्च वृद्धिश्च अवयवबृंहणं च जातामित्यवगम्यते । स्वैरेवावयवैर्मङ्गलं कृतं इत्यनेन स्वावयवान् पश्यतो नायकस्यापि अत्यानन्दश्च जात इति भावः । ) अत्र हर्षो नाम संचारी भावः । स्वीया मध्या च नायिका । नायकोऽनुकूलः । प्रवासानन्तरं संभोगशृगारः । चेष्टाकृतं आत्मोपक्षेपरूपं शृङ्गारि नर्म । रूपकालंकारः ।

( १ ) $D_1$,$D_2$,$D_4$,$D_6$,Mg प्रक्षेपणं (२) $D_1$,$D_5$,$D_6$ अर्घः; $D_2$ अर्घ्यं ( ३ ) $D_6$ अवतीर्णः; $D_1$,$D_2$,$D_5$ विकीर्णः; $D_4$ दत्तं वितीर्णम् ( ४ ) $D_4$ कल्याणाचरणं ( ५ ) This is given by $D_3$ only ( ६ ) Bm जातिरलंकारः

धूर्तेन नायकेन कृतां वञ्चनां नायिका सख्यै निवेदयति —

कान्ते सागसि यापिते प्रियसखीवेषं विधायागते
भ्रान्त्यालिङ्ग्य मया रहस्यमुदितं तत्सङ्गमाकाङ्क्षया ।
मुग्धे दुष्करमेतदित्यतितरामुक्त्वा सहासं बला-
दालिङ्ग्य च्छलितास्मि तेन कितवेनाद्य प्रदोषागमे ॥ ४१ ॥

( b ) S तत्सङ्गमापेक्षया. ( c ) $D_3$,$D_6$,Oa, S, U, Mg. दुष्कर एष इत्यति॰; T दुष्करमेष इत्य॰.

Today, in the evening twilight, the knave deceived me: as he had offended against me, I sent him away ; he, however, put on the clothes of my dear friend and came back again. Under the illusion that he was my friend, I embraced him and communicated to him my secret that I wished to meet him. Thereupon he replied " Ah, simple one, but that is very difficult ( now ) ", and he laughed wildly and pressed me powerfully in his arms ! (41)

सागसि सापराधे कान्ते प्रियतमे यापिते निष्कासिते प्रियसखीवेषं इष्टवयस्यावेषं नेपथ्यं विधाय कृत्वा पुनरागते प्राप्ते सति मया भ्रान्त्या अज्ञानेन तमालिङ्ग्य परिरभ्य तत्सङ्गमाकाङ्क्षया तस्य सङ्गमः संपर्कः तस्मिन्नाकाङ्क्षा वाञ्छा तया रहस्यं रहसिभवं रहस्यमुदितं कथितम् । अत्र रहस्यं नाम

गृहागतः प्रियो मया (निष्कारेणं) अवधीरितः सोऽवश्यं त्वया इदानी-मेवानेतव्यः । नो चेत् क्षणमपि जीवितं धारयितुं न शक्नोमीत्येवंरूपं वचन-मित्यवगन्तव्यम् । हे मुग्धे मूढे एतत्कार्यं अतितरां अत्यर्थं दुष्करं दुर्घट-मित्युक्त्वा ततः सहासं हासेन सहितं यथा भवति तथा बलात् प्रसह्य आलिङ्ग्य तेन कितवेन धूर्तेन अद्य अस्मिन् दिने प्रदोषागमे । प्रदोषो रजनीःमुखमित्यमरः । तस्यागमः प्राप्तिः तस्मिन् छलिता वञ्चितास्मीति संबन्ध । स्पष्ट एवाभिप्रायः । अत्र नायिका स्वीया मध्या च । किं च कलहान्तरिता । नायकः शठः । संभोगशृङ्गारः । अत्र नर्मगर्भः । युक्तिरलंकारः ।

(१) $D_4$ explains प्रियसंपर्कविषयिकवाञ्छया (२) found in $D_3$ only (३) $D_3$,Mg. एषः एतत्कार्यं अतितरां अत्यर्थं दुष्करः दुर्घटः इत्युक्त्वा (४) $D_6$ मुग्धा (५) $D_4$, $D_5$, Bm, Mg, Mt drop किं च कलहान्तरिता

नायकोक्तिः—

**आशङ्क्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादराद्**
**व्याजेनागतमावृणोति हसितं न स्पष्टमुद्वीक्षते ।**
**मय्यालापवति प्रतीपवचना सख्या समं भाषते**
**तन्व्यास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः ॥ ४२ ॥**

(b) $D_5$ व्याजेनेङ्गितमावृणोति हसितं साकूतमुद्वीक्षते; Bm नो स्पष्टमुद्वीक्षते (c) $D_3$ प्रतीपवचनात्; $D_6$ प्रतीपवचनं (d) S रम्यक्रमः

Expecting that I would fall at her feet she carefully covers them up with the hem of her garment; she conceals the smile upon her face under some pretext, and does not look me in the face; when I talk to her, being averse to talking (to me), she engages her friend in conversation: let alone her ardent love, even this anger of the slender one, as it rises within her, is so sweet! (42)

प्रणतिं प्रणाममाशङ्क्य उत्प्रेक्ष्य एष प्रणामं करिष्यतीत्याशङ्क्येत्यर्थः। आदराद् बहुमानात् पादौ चरणौ पटान्तपिहितौ चैलाञ्चलाच्छादितौ करोति। आगतमुद्गतं हसितं हास्यं व्याजेन केनापि च्छद्मना आवृणोति प्रच्छादयति। स्पष्टं व्यक्तं नोद्वीक्षते नालोकयति। मय्यालापवति भाषमाणे सति प्रतीपवचना प्रतिकूलवाक्सती सख्या वयस्यया समं सार्धं भाषते आलपति। तन्व्याः कान्तायाः निर्भरप्रणयिता प्रणयस्य भावः प्रणयिता निर्भरा चासौ प्रणयिता च निर्भरप्रणयिता। त्वतलोर्गुणवचनस्येति पुंवद्भावः। तिष्ठतु आस्ताम्। मानोऽपि ईर्ष्याकोपोऽपि रम्योदयः मनोहरोद्गम इति संबन्धः। स्पष्ट एवाभिप्रायः। स्वीया प्रगल्भा च नायिका। नायकः शठः। मानकृतो विप्रलम्भशृङ्गारः मानकृतं चेष्टारूपं नर्म। जातिरलंकारः।

(१) $D_3$ प्रतीपवचनात् प्रतिकूलवाक्यात् (२) $D_2$, $D_3$ प्रणयिन्या भावः प्रणयिता (३) $D_4$,Bm drop the sentence त्वतलोर्गुण° (४) Mg अत्र नायिका स्वीया मध्या च

कवेर्वाक्यम् —

**सा यावन्ति पदान्यलीकवचनैरालीजनैः पाठिता**
**तावन्त्येव कृतागसो द्रुततरं व्याहृत्य पत्युः पुरः।**
**प्रारब्धा परतो यथा मनसिजस्येच्छा तथा वर्तितुं**
**प्रेम्णो मौग्ध्यविभूषणस्य सहजः कोऽप्येष कान्तः क्रमः॥ ४३॥**

(b) Oa, S कृतागसोऽद्भुततरं (c) $D_3$ प्रारब्धं; $D_5$ प्रारेभे पुरतो (d) Bm, Mg. मौढ्यविभूषणस्य

After she had uttered very hurriedly, before her offending lord, whatever words her cunning friends had taught her, she began presently to behave as the God of love required her to do: such is the unique way of love, so natural and charming, with sweet innocence as its ornament! (43)

सा नायिका अलीकवचनैर्मिथ्याभाषितैरालीजनैः सखीजनैः यावन्ति पदानि यावन्तः शब्दाः पाठिता ओगमिता कृतागसः कृतापराधस्य पत्युः

प्रियस्य पुरः अग्रतः तावन्त्येव पदानि द्रुततरं अतिशीघ्रं व्याहृत्य उच्चार्य परतः ततःपरं मनसिजस्य मन्मथस्य इच्छाकाङ्क्षा यथा तथा वर्तितुं प्रारब्धा प्रक्रान्ता। मौग्ध्यविभूषणस्य मौग्ध्यमप्रागल्भ्यं विभूषणं यस्य तत्तथोक्तम्। तस्य प्रेम्णः प्रणयस्य एष सहजः स्वाभाविकः कान्तो मनोहरः कोऽपि क्रमः कश्चन प्रकारः इति संबन्धः। अत्राभिप्रायो व्यक्त एव। नायिका स्वीया मुग्धा च। नायकः शठः। सम्भोगशृङ्गारः। अत्र सङ्गेच्छारूपं शृङ्गारि नर्म। जातिरलंकारः।

(१) $D_3$ उपदेशिताः (२) Bm, Mg मौढ्य० (३) Mt प्रियत्वस्य (४) $D_4$ रम्यः (५) Bm,Mg मध्या

कवेर्वाक्यम् —

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने संकुञ्चितभ्रूलतम्।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णं क्षणाच्
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ४४ ॥

(a) $D_5$ विलुलितं संभाषिता स्फारितं (b) $D_6$ संकूचितभ्रू०; $D_5$ कोपाञ्चितभ्रूलतं; Bm किंचाञ्चितभ्रूलतम्; $D_2$,$D_3$, Mg, O, T, U, Oa, S संकोचितभ्रूलतम् (c $D_2$,Bm,Mg बाप्पाम्बुपूर्णं क्षणात्; $D_3$ बाप्पाम्बुपूर्णेक्षणं ; $D_5$ बाष्पाम्बुभिर्वीक्षणं

Ah! how when the lover is faithless, the eye has become an adept in the art of assuming manifold forms! When he is still far away, it glances most wistfully; when he arrives, it turns itself aside; when he talks, it dilates; when he embraces, it becomes red; when he seizes her garment, it contracts the lines of its brow; and when he contrives to fall at the feet of the angry lady, it fills itself with the moisture of tears! (44)

जातागसि कृतापराधे प्रेयसि प्रियतमे दूरात् स्थिते सतीति शेषः। उत्सुकमुत्कण्ठितम्। आगते प्राप्ते सति विवलितं विवर्तितम्। संभाषिण्या-

लपिते सति स्फारितं विस्तारितं संश्लिष्यत्यालिङ्गति सति अरुणं रक्तं गृहीतवसने आकृष्टवाससि सति संकुञ्चितभ्रूलतं संकुञ्चिता भुग्ना भ्रूलता यस्य तत्तथोक्तम् । चरणानतिव्यतिकरे सति आनतेः प्रणामस्य व्यतिकरः संबन्धः चरणयोः पादयोः आनतिव्यतिकरो यस्य तत्तथोक्तः तस्मिन् । बाष्पाम्बुपूर्णं अश्रुजलैर्भरितं मानिन्या मानवत्याश्चक्षुर्नयनं क्षणादल्पकालात्प्रपञ्चचतुरं प्रपञ्चेन औत्सुक्यादिबहुप्रकारेण चतुरं मनोहरं जातं संपन्नमहो आश्चर्यमिति संबन्धः । अत्रौत्सुक्य स्वाभाविकप्रेमातिशयेन । विवलितत्वमपराधिन द्रष्टुं असहमानतया । स्फारितत्वं क्रोधातिशयेन । अरुणत्वं क्रोधवृद्ध्या भ्रूलतासंकोचः क्रोधातिशयेन वाष्पाम्बुपूर्णत्वं क्रोधशान्त्या इति वेदितव्यम् । अत्र नायिका स्वीया मध्याप्रगल्भयोरन्यतरा । नायकः शठः । मानकृतो विप्रलम्भशृङ्गारः । ईर्ष्याक्रोधप्रायं नर्म । जातिरलंकारः ।

( १ ) $D_6$ संकुञ्चितभ्रूलतं ( २ ) $D_6$ ० जलपूर्णं ( ३ ) $D_1$,$D_2$, $D_3$, क्रोधोदयेन; Mg कोपोदयेन ( ४ ) $D_3$,$D_5$ भ्रूलतासंकुञ्चितत्वं

कवेर्वाक्यम् —

**अङ्गानामतितानवं कुत इदं कम्पश्च कस्मात्कुतो**
**मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति ।**
**तन्व्या सर्वमिदं स्वभावत इति व्याहृत्य पक्ष्मान्तर-**
**व्यापी बाष्पभरस्तया वलितया निश्वस्य मुक्तोऽन्यतः ॥४५॥**

( a ) $D_5$ कस्मादिदं ; T तस्मात्कुतो

Whence this exceedingly great leanness of limbs, whence this tremor ? Whence, Oh simple one, this countenance with the wan cheeks ? On these questions of the lord of her life, the slender one replied, " All this has come off of itself," and turning away, she heaved sighs, and discharged elsewhere the burden of tears that filled her eyelashes. (45)

हे मुग्धे अङ्गानामवयवानामिदमतितानवं अतिकार्श्यं कुतः कस्माद्धेतोः । अयं कम्पश्च ते वेपथुः कस्मात् । इदमाननं मुखं पाण्डुकपोलं च पाण्डुगण्डं

कुत इत्येवं प्राणेश्वरे प्रियतमे अनुयुंञ्जति सति तन्व्या कान्तया इदं सव स्वभावतो निसर्गादिति व्याहृत्य उक्त्वा वलितया निवृत्तया तया निश्वस्य निश्वासं कृत्वा पक्ष्मान्तरव्यापी पक्ष्मणामक्षिलोम्नामन्तरं मध्यं व्याप्नोतीति पक्ष्मान्तरव्यापी बाष्पभरो अश्रुपूरः अन्यतः इतरत्र मुक्तः विसृष्ट इति संबन्धः । अत्र नायके कार्यान्तरव्यासङ्गेन चिरयित्वा समागत्य तनुत्वादिकं स्वस्यानागमनादिति जानत्यपि कुत इति पृच्छति सत्यार्जवेन वक्तुमसहमानया नायिकया सर्वमिदं स्वभावत इति वक्रोक्त्या निर्वेदः सूचितः । बाष्पभरो मुक्तोऽन्यत इत्यनेन दैन्यसंवरणं सूचितम् । नायिका स्वीया मध्या च । किं च विरहोत्कण्ठिता । यथोक्तं भारतीये—अनेककार्यव्यासङ्गाद् यस्या नागच्छति प्रियः । कामतः सैव दुःखार्ता विरहोत्कण्ठिता मता ॥ अस्यास्तनुत्वं कम्पश्च पाण्डुता बाष्पनिर्गमः । निर्वेदश्वासदैन्याद्या अनुभावा भवन्त्यमीति ॥ दैन्यं नाम संचारी भावः । नायकोऽनुकूलः । प्रणयमानकृतो विप्रलम्भशृङ्गारः । अत्र मानकृतं वाग्रूपं शृङ्गारि नर्म । जातिरलंकारः ।

( १ ) $D_4$ पाण्डुगण्डस्थलं ( २ ) $D_1$, $D_2$, $D_5$ अनुनयं जाते सति ; $D_3$ अनुनयं प्रयुञ्जति सति ; $D_4$ Bm, Mg इति प्राणेश्वरे पृच्छति ; Mt पृच्छति सानुनयं पृच्छमाने सति ( ३ ) $D_3$ adds करुणातिशयेन ( ४ ) Mt दैन्यं सूचितं ( ५ ) Bm मुग्धा

कवेर्वाक्यम्—

**रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा**
**पान्थेनात्मवियोगदुःखपिशुनं गीतं तथोत्कण्ठया ।**
**आस्तां जीवितहारिणः प्रवसनालापस्य संकीर्तनं**
**मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा ॥ ४६ ॥**

( b ) Oa तदुत्कण्ठया ; Bm तदोत्कण्ठया ( c ) T ॰हारिणा प्र॰

A traveller, frightened at the thunder of a cloud moving slowly owing to the burden of water, sang in the night, with tears in his eyes, a song betraying the sorrow of his heart at severance from his love in such a sad tone, that the people

not only gave up all talk about life-killing travel, but also bade adieu forthwith to sulking pride itself. (46)

रात्रौ निशि वारिभरालसाम्बुदरवोद्विग्नेन वारिणो जलस्य भरो भारः तेनालसः मन्थरः स चासावम्बुदश्च तस्य रवो गर्जितं तेन उद्विग्नः त्रस्तः तेन जाताश्रुणा उदितबाष्पेण पान्थेन प्रोषितेनात्मवियोगदुःखपिशुनं आत्मनः स्वस्य वियोगो विरहस्तेन दुःखं व्यथा तस्याः पिशुनं सूचकं यथा भवति तथा उत्कण्ठया औत्सुक्येन तथा तेन प्रकारेण गीतं गानं कृतं जीवितहारिणः प्राणापहारिणः प्रवसनालापस्य संकीर्तनं प्रवासकथायाः उच्चारणं आस्तां तिष्ठतु । यथा येन प्रकारेण लोकेन जनेन सरभसं सत्वरं मानस्यापि प्रणयकोपस्यापि जलाञ्जलिः जलस्याञ्जलिर्जलाञ्जलिः निवाप इत्यर्थः । स दत्तो वितीर्ण इति संबन्धः । तस्य पान्थस्य तथाविधमार्तनादं श्रुत्वा लोकः क्षणमात्रविरहादपि बिभेति स्मेत्यभिप्रायः । दैन्यं नाम सञ्चारी भावः । नायिकानायकयोर्विशेषो न स्फुटः । प्रवासविप्रलम्भशृङ्गारः । जातिरलंकारः ।

( १ ) $D_4$ explains उदकभरमन्थरजलदगर्जितभीतेन. ( २ ) $D_3$ adds उद्विग्नेन त्रस्तेन अत्याहितं प्रापितेन महद्भयं प्राप्तेनेत्यर्थः । अत एव जाताश्रुणा० ( ३ ) $D_4$ explains स्वविरहव्यथासूचकं यथा तथा उत्कण्ठया ( ४ ) $D_4$ drops इति संबन्धः

नायकोक्तिः—

स्वं दृष्ट्वा करजक्षतं मधुमदक्षीबाविचार्येर्ष्यया
गच्छन्ती क नु गच्छसीति विधृता बाला पटान्ते मया ।
प्रत्यावृत्तमुखी सबाष्पनयना सा मुञ्च मुञ्चेति मां
कोपप्रस्फुरिताधरं यदवदत् तत्केन विस्मार्यते ॥ ४७ ॥

(a) Bm स्वां दृष्ट्वा करजक्षतिं (b) T व्यधृता ; T पटान्ते तया

As the fair girl, intoxicated with sweet wine, saw the nail-wound inflicted by herself, she was filled with jealousy and rashly set out to go ; and I held her back by

the hem of her garment with the words: " Whither dost thou go ?" She turned round; her eyes were filled with tears and her lips were quivering with anger and she spoke: " Leave me, leave me ". O, who would ever forget it ? (47)

बाला तन्वी मधुमदक्षीबा मत्ता भूत्वा स्वमात्मीयं आत्मना कृतमित्यर्थः। करजक्षतं नखक्षतं दृष्ट्वा वीक्ष्य अविचार्य स्वेन कृतमित्यज्ञात्वा ईर्ष्यया कोपेन सपत्नीकृतमित्यसहमानया गच्छन्ती अपयान्ती क गच्छसीति कुत्र व्रजसीति। नु शब्दः पृच्छायाम् । मया पटान्ते चेलाञ्चले विधृता गृहीता। सा प्रत्यावृत्तमुखी प्रतिनिवृत्तवदना सबाष्पनयना साश्रुनेत्रा सती सा मां मुञ्च मुञ्च विसृज विसृजेति कोपप्रस्फुरिताधरं कोपेन प्रस्फुरितः कम्पितः अधरो यस्मिन् कर्मणि तत्तथोक्तम् । अवदत् अवोचत् इति यत् तत्कर्म केन विस्मार्यते केन हेतुना विस्मरणं प्राप्यते न केनापि विस्मारयितुं शक्यमित्यर्थः। इति संबन्धः । स्पष्ट एवाभिप्रायः । नायिका स्वीया मध्याप्रगल्भयोरन्यतरा। नायकोऽनुकूलः । ईर्ष्याक्रोधप्रायं कैशिकीवृत्तेरङ्गं नर्म । जातिरलंकारः ।

(१) $D_1$, $D_2$, $D_3$, Mt मधुनो मद्यस्य मदेन क्षीबा मत्ता भूत्वा
(२) Mt °मित्यसूयया (३) $D_1$, $D_2$, $D_5$ प्रकम्पितः; $D_3$ चलितः
(४) $D_2$ मुग्धाप्रगल्भयो°

नायकेन भेदं गमिता सखी नायिकामुपालभते -

चपलहृदये किं स्वातन्त्र्यात्तथा गृहमागत—
श्चरणपतितः प्रेमार्द्रार्द्रः प्रियः समुपेक्षितः ।
तदिदमधुना यावज्जीवं निरस्तसुखोदया
रुदितशरणा दुर्जातानां सहस्व रुषां फलम् ॥ ४८ ॥

(a) S, Oa त्वया गृहमा°

Oh thou with thy fickle heart ! Wherefore didst thou spurn thy lover when out of free impulse and overflowing with love he had come to thy dwelling in that way and had thrown himself at thy feet ? Now endure, as long as thou

livest, the fruit of thy sordid anger ; happiness shall never more come to thee ; and thy tears shall be thy sole refuge. (48)

हे चपलहृदये चञ्चलचित्ते । अत्र चपलेत्यनेनाविमृश्यकारित्वं विवक्षितम् । तथा तेन प्रकारेण प्रेमार्द्रार्द्रः अत्यन्तमार्द्रः सरसः प्रियो वल्लभः गृहं भवनमागतः प्राप्तश्चरणपतितः पादप्रणतः सन् स्वातन्त्र्यात् स्वच्छन्दत्वात् किं समुपेक्षितः किमर्थमवधीरितः । तत् तस्मात्कारणात् अधुना इदानीं यावज्जीवं जीवितावधि निरस्तसुखोदया अपाकृतसुखप्राप्तिः रुदितशरणा रोदनालम्बा सती दुर्जातानां दुष्टानां रुषां रोषाणां इदं फलं विपाकं सहस्व मृष्यस्वेति सम्बन्धः । नायिका स्वीया मध्या च । किं च कलहान्तरिता । यथोक्तं भारतीये — सेर्ष्यः कलहनिष्क्रान्तो यस्या नागच्छति प्रियः । सा पश्चात्तापसंप्राप्ता कलहान्तरिता भवेत् ॥ चिन्तानिश्वासखेदैश्च हृत्तापाभिनयेन च । सखीनां संप्रलापैरप्यात्मावस्थावलोकनैः । मुग्धा दैन्याश्रुपातैश्च रोगस्यागमनेन च ॥ विभूषणतनुत्वेन दुःखेन रुदितेन च । खण्डिता विप्रलब्धा च कलहान्तरितापि वा ॥ तथा प्रोषितकान्ता च भावैरेवं प्रयोजितेति ॥ नायकः शठः । सोपालम्भवचनं नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_4$ explains प्रणयेनात्यन्तद्रवीभूत इत्यर्थः । ( २ ) $D_3$ adds सख्युपदेशं विना इत्यर्थः । ( ३ ) $D_4$ यावज्जीवं निरस्तः अपाकृतः सुखस्य उदयः प्राप्तिः यस्याः सा तथोक्ता । ( ४ ) Mg रोदनालम्बना; $D_4$ रोदनमेव शरणं यस्याः सा तथाविधा सती ( ५ ) $D_1$, $D_2$, $D_3$ मर्षयस्व ; Mg मर्षय ; Mt क्षमस्व ( ६ ) $D_6$ मुग्धा ( ७ ) Mt प्रयोजयेदिति

नायकोक्तिः —

नभसि जलदलक्ष्मीं सास्रया वीक्ष्य दृष्ट्या
प्रवससि यदि कान्तेत्यर्धमुक्त्वा कथंचित् ।
मम पटमवलम्ब्य प्रोल्लिखन्ती धरित्रीं
यदनुकृतवती सा तत्र वाचो निवृत्ताः ॥ ४९ ॥

When she saw the splendour of the clouds in the sky with her tearful eyes, she somehow managed to utter half of her speech—" Now, if you, Oh my love, set off on a journey— " and then clinging to my garment and scratching the ground below, she acted in a manner, which to describe is indeed beyond words ! (49)

नभस्याकाशे जलदलक्ष्मीं मेघसामग्रीं सास्रया सबाष्पया दृष्ट्या दृशा वीक्ष्य विलोक्य हे कान्त प्रिय प्रवससि यदि प्रवासं करोषि चेत् इति कथंचित् कृच्छ्रेण अर्धं सावशेषं वाक्यमिति शेषः । उक्त्वा भाषित्वा मम पटमंशुकमवलम्ब्य गृहीत्वा धरित्रीं भुवं प्रोल्लिखन्ती कर्षन्ती अनु पश्चात् सा यत्कर्म कृतवती तत्र तस्मिन्कर्मणि वाचः उक्तयः निवृत्ताः व्यावृत्ता इति संबन्धः । यत्कृतवतीत्यत्र यच्छब्दवाच्यैश्चिन्तानिश्वासवैवर्ण्यगद्गदादिभिरनुभावैस्त्वां विना क्षणमपि जीवितुमहं न शक्नोमि इत्ययमर्थः प्रवससि यदि इत्यस्य वाक्यस्य शेषत्वेनावगन्तव्यः । तत्र वाचो निवृत्ता इत्यनेन नायिकायाश्चिन्तानिश्वासादीनामनुभावानां दशाविशेषः पश्यतां मनोगोचर एव न वाग्गोचर इत्ययमर्थो गम्यते । दैन्यं नाम संचारी भावः । अत्र नायिका स्वीया मध्या च । नायकोऽनुकूलः । भविष्यत्प्रवासविप्रलम्भशृङ्गारः । नर्मस्फोटः । जातिरलंकारः ।

( १ ) $D_3$ मेघशोभां ; $D_4$ मेघश्रियं ( २ ) $D_3$ भुवमुल्लिखन्ती वामपादाङ्गुष्ठेन कर्षन्ती स्त्रीणामेतज्जातीयं इति । अनुपश्चात् etc. ( ३ ) $D_1$,$D_5$, • गद्गदकोटिभिरनुभावैः ( ४ ) मुग्धा च

नायिकानायकयोरुक्तिप्रत्युक्तिरूपा वाक्यमाला —

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥ ५० ॥

( a ) Oa रुषा रोषात्

" Fair girl ! " " Well, my lord ;" " Cast aside thy resentment, oh sulky one ! " " What have I done in my resentment ? " " It has made me troubled. " " Thou hast done me no wrong ; all sins are mine. " " Why dost thou weep with a sobbing voice ?" " Before whom do I weep ? " " Well, before me. " " What am I to thee ? " " Beloved. " " I am not, that is why I weep. " (50)

बाले मुग्धे । नाथ स्वामिन् । हे मानिनि कोपने रुषं कोपं विमुञ्च त्यज । मया रोषात् कोपात्किं कृतं किमाचरितम् । अस्मासु खेदः क्लेशः कृत इति शेषः । भवान् मे मह्यं नापराध्यति न द्रुह्यति क्रुधद्रुहेर्ष्यासूयानां यं प्रति कोप इति चतुर्थी । मयि सर्वे सकला अपराधाः द्रोहाः सन्ति । तत् तस्माद्धेतोः किं गद्गदेन स्खलितेन वचसा वचनेन रोदिषि रोदनं करोषि । कस्याग्रस्तः पुरः रुद्यते रोदनं क्रियते । एतन्ममाग्रतः इदं रोदनं क्रियते खलु । ननु तवाहं कास्मि । दयिता प्रिया भवसि । नास्मीति न भवामीत्यतः कारणाद्रुद्यते इति संबन्धः । अत्र प्रगल्भायां नायिकायां बाले इत्यामन्त्रणं नायकेन वक्रोक्त्या कृतं तथापि तज्ज्ञात्वा तथैव वक्रोक्त्या प्रियतमं प्रति नाथ इत्यामन्त्रणं कृतम् । ततस्तेनार्जवमवलम्ब्य मानिनि रुषं मुञ्च इत्यनुनयः कृतः । ततस्तया वक्रोक्त्यैव रोषान्मया किं कृतमित्युत्तरं दत्तम् । ततस्तेन अस्मासु खेदः कृत इत्युक्तम् । ततस्तया अपराधिनि खलु खेदः क्रियते भवान् मे नापराध्यति कुतः खेदः क्रियते इति विपरीतलक्षणया भवानपराधी खेदः कथं न कर्तव्य इत्ययमर्थः सूचितः । ततस्तेन सर्वेऽपराधा मयि इत्यपराधाङ्गीकारेण रुषं मुञ्चेत्यनुनयः प्रकटीकृतः । ततस्तया तस्य रोषस्यामोचनात् किं कृतमित्युक्तम् । ततस्तेन गद्गदेन वचसा रोदिषि इत्यनेन किं न कृतं खेदमूलं रोदनं करोषीत्युक्तम् । ततस्तया कस्याग्रतो रुद्यत इत्यनेन सबन्धवतः खलु रोदनं खेदमूलम् । त्वं मम को भवसि इत्युक्तम् । ततस्तेन तस्या वक्रोक्त्याभिप्रायं विहाय वाक्यस्य वाच्यार्थमेव स्वीकृत्य ननु एतन्ममाग्रतो रुद्यते इत्युत्तरं दत्तम् । ततस्तया पुरतो रोदितुं अहं तव कास्मीत्युक्तम् । ततस्तेन मम त्वं दयितेत्युक्तम् । ततस्तया ते तव दयितैव नास्मीत्यतः कारणात् मया रुद्यत इत्युक्तमित्यवगन्तव्यम् । अत्र नायिका स्वीया धीराधीरप्रगल्भा च । किं च खण्डिता । यथोक्तं भारतीये –

अन्यासङ्गात्समृचिते वासके नागतः प्रियः । यस्याः सा नाम दुःखार्ता खण्डितेत्यभिधीयते इति । नायकः शठः विप्रलम्भशृङ्गारः । अत्र मानकृतं वाग्रूपं शृङ्गारि नर्म । वाक्योवाक्यमलंकारः । युक्तिप्रयुक्तिमद्वाक्यं वाक्योपवाक्यमुदाहृतमित्युक्तत्वात् ।

( १ ) $D_3$ ०वाक्यमाह ( २ ) $D_6$ दोषाः ( ३ ) $D_3$ वाष्परुद्धस्वरेण वचसा ( ४ ) $D_3$ प्राणेश्वरी ( ५ ) $D_3$ gives the following divergent text :—आदौ नायकेनात्यन्तप्रौढां नायिकां प्रति बाले इत्यामन्त्रणं कृतम् । ततस्तया नाथ इति व्यङ्ग्यमुत्थापितम् । नाथः पशुपाल इति भद्रमल्लः । ततस्तेन हे मानिनि परिहासेऽपि कोपशीले रुषं मुञ्च इत्यनुनीतम् । ततस्तया रोषात् भवति किं कृतम् इत्युक्तम् । किमपि न कृतं खलु इत्यर्थः । ततस्तेनास्मासु खेदः कृतः इत्युक्तम् । ततस्तया अपराधिनि खलु खेदः क्रियते । न भवान् ममापराध्यति खलु । सर्वापराधा मय्येव । भवतः कुतः खेदः इति विपरीतलक्षणया भवानपराधी खेदः कथं न कर्तव्यः इत्ययमर्थ इत्युक्तम् । ततस्तेन मय्यपराधाभावे भवत्या किमर्थं रुद्यत इत्युक्तम् । ततस्तया कस्याग्रतो रुद्यते इत्युक्तम् । ततस्तेन ममैव पुरतः इत्युक्तम् । ततस्तयाहं तव कास्मि, भवतः पुरतो रोदितुं न युक्तम् । ततस्तेन वक्रोक्त्यभिप्रायं विहाय वाक्यस्यार्थमेव स्वीकृत्य मम त्वं दयितेत्युक्तम् । ततस्तया दयिता नास्मि इत्यतः कारणात् रुद्यते इत्युक्तमित्यवगन्तव्यम् । ( ६ ) $D_1$, $D_2$ किंकृतं ; $D_6$ प्रकृतं ( ७ ) $D_1$, $D_5$ वाकोवाक्यं ; $D_4$ वक्रवाक्यम् ; $D_2$ वाचोवाक्यम् ; Bm वाक्योवाक्यम्

पूर्वं मौग्ध्येन वञ्चितास्मीति पश्चात्तापं गताया नायिकाया आत्मोपालम्भं कविराह —

श्लिष्टः कण्ठे किमिति न मया मूढया प्राणनाथ—
श्चुम्बत्यस्मिन् वदनविनतिः किं कृता किं न दृष्टः ।
नोक्तः कस्मादिति नववधूचेष्टितं चिन्तयन्ती
पश्चात्तापं वहति तरुणी प्रेम्णि जाते रसज्ञा ॥ ५१ ॥

( b ) $D_2$ विनुतिः ; $D_3$ नमितिः ; $D_6$, Bm विधुतिः ( d ) T व्रजति

" Silly girl that I was, why did I not clasp my lord by the neck ? Why did I lower my face, while he tried to kiss me ? Why did I not look up to him ? Why did I not speak to him ? " The young wife who, with the awakening of love in her heart, had tested the sweets of love, looks back with regret on her own attitude in the days when she was a newly-married bride. (51)

तरुणी युवतिः प्रेम्णि प्रणये जाते संभूते सति लज्जावरणं विहाय प्रकाशमाने सतीत्यर्थः । रसज्ञा रुचिज्ञा सती संभोगसौख्यं विशेषेण जानातीत्यर्थः । तदानीं मूढया अज्ञया मया प्राणनाथः प्राणेश्वरः किमिति कण्ठे नाश्लिष्टः नालिङ्गितः । किं चास्मिन्प्राणनाथे चुम्बति चुम्बनं कुर्वति सति वदनविनैतिः मुखनमनं किं कृता किमर्थमाचरिता । किं च स प्राणनाथः किं न दृष्टः किमिति नावलोकितः किं च स कस्माद्धेतोर्नोक्तः न संभाषितः इत्यनेन प्रकारेण नववधूचेष्टितं नवोढाव्यापारं आत्मीयमिति शेषः । चिन्तयन्ती स्मरन्ती पश्चात्तापमनुशयं एतावन्तं कालं मौग्ध्येन वञ्चितास्मीत्येवंरूपं वहति धारयतीति संबन्धः । अत्र नायिका स्वीया मध्या च । नायकोऽनुकूलः । संभोगशृङ्गारः अनुशयाक्षेपालंकारः[5] ।

( १ ) $D_1$, अज्ञतया ; Bm अज्ञानान्मया ( २ ) $D_6$ चुम्बनमनुसरति ; Bm, Mt चुम्बति सति ( ३ ) $D_2$ °विनुतिः ; $D_3$ °नमितिः ; Bm °विधुतिः ( ४ ) $D_4$ अनुनयाक्षेपालंकारः ( ५ ) Mt adds after this स्पष्ट एवाभिप्रायः

प्रयास्यन्तं नायकं नायिका वक्रोक्त्या वारयति—

**वान्तैर्लोचनवारिभिः सशपथैः पादप्रणामैः प्रियै-**
**अन्यैस्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम् ।**
**धन्याहं व्रज मङ्गलं सुदिवसं प्रातः प्रयातस्य ते**
**यत्स्नेहोचितमीहितं प्रियतम त्वं निर्गतः श्रोष्यसि ॥ ५२ ॥**

( a ) $D_6$ वार्तैर्लोचन॰ ( b ) $D_1$,$D_6$ अन्यास्ता ; $D_2$ अन्यैश्चापि निवारयन्ति ; T अन्यैश्चाविनिवारयन्ति ( d ) $D_1$,$D_2$,$D_3$ ॰माहितं

There are some pitiable girls who hold back their lovers about to set out on a journey by gushing tears, by oaths, by falling at their feet, and by other forms of endearment. Darling, I am really lucky (I am not feeling miserable as they do) Go! Good luck ! A good day ! Of my intention befitting our love, thou wilt, Oh dear, hear after thy departure in the morning. (52)

वान्तैर्निर्गलितैः लोचनवारिभिः नयनजलैः सशपथैः शपथसहितैः पादप्रणामैः चरणपतनैः शपथैः पादप्रणामैश्चेत्यर्थः । अन्यैरपरैः प्रियैरिष्टकरणै-श्चापि ताः कृपणाः दीनाः स्त्रियः प्रास्थित प्रयाणोद्युक्तं प्राणेश्वरं प्राणनाथं विनिवारयन्ति निषेधयन्ति । अहं तु धन्या पुण्या अकृपणेत्यर्थः । प्रयातस्य प्रयातुमुद्युक्तस्य ते प्रातः प्रभाते सुदिवसं शोभनदिनं मङ्गलं तदेव माङ्गल्यकारि । व्रज गच्छ । हे प्रियतम त्वं निर्गतः सन् मया स्नेहोचितं स्नेहस्य प्रेम्णः उचितं अहं यदीहितं आचरितं तत् श्रोष्यसि आकर्णयिष्यसि इति सबन्धः । अत्र स्नेहोचितमीहितं श्रोष्यसीति अनेन आत्मनो भाविनीं विपत्तिं सूचयित्वा प्रियस्य गमनं निषेधतीति इत्याभिप्रायः । नायिका स्वीया प्रगल्भा च । नायकोऽनुकूलः । भाविप्रवासविप्रलम्भशृङ्गारः । सोपालम्भवचनं नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_1$,$D_2$,Bm,Mt,Mg निर्गतैः ; $D_6$ वातैः ( २ ) $D_6$ हर्ष-करणैः ; $D_4$, Mg इष्टकारणैः ( ३ ) $D_1$,$D_3$ ०माहितं ; $D_2$ ०महितं ( ४ ) $D_4$, Mg, Mt निषेधयति ; $D_6$ निषेध्यति ; Bm निवारयति ( ५ ) Bm मध्या ( ६ ) Mg शृङ्गारि नर्म

कवेर्वाक्यम् —

लग्ना नांशुकपल्लवे भुजलता नो द्वारदेशे स्थितं
नो वा पादयुगे मुहुर्निपतितं तिष्ठेति नोक्तं वचः ।
काले केवलमम्बुदालिमलिने गन्तुं प्रवृत्तः शठः
तन्व्या बाष्पजलौघकल्पितनदीपुरेण रुद्धः प्रियः ॥ ५३ ॥

( a ) $D_1$ द्वारदेशेऽर्पिता ( d ) Bm तस्या बाष्प०.

She did not fasten her creeper-like arm on the skirt of his garment, neither did she stand in the doorway, nor did she frequently fall at his feet, nor speak the word "Stay." But as the rogue was about to depart in that dark cloud-thick weather, she held him back through the swollen river formed by a flood of her tears. (53)

अंशुकपल्लवे प्रियस्य चैलाञ्चले भुजलता नायिकाया दोर्वल्ली न लग्ना न सक्ता। द्वारदेशे द्वारस्थले नो स्थितं नोषितम्। भावे निष्ठा। पादयुगे प्रियस्य चरणद्वन्द्वे वा मुहुः पुनः पुनः न पतितं न प्रणतम्। तिष्ठ आस्स्व इति वचो वचनं वा नोक्तं नोदीरितम्। अम्बुदालिमलिने मेघपटलश्यामे काले समये गन्तुं प्रयातुं प्रवृत्त उद्युक्तः। शठः अनृजुः अयुक्तकारीत्यर्थः। प्रियो वल्लभः तन्व्या केवलं बाष्पजलौघकल्पितनदीपूरेण अश्रुसलिलसमूहसंपादिततटिनीप्रवाहेण। केवलशब्दोऽवधारणे। पूरेणैवेत्यर्थः। रुद्धो निवारित इति संबन्धः। अभिप्रायो व्यक्त एव। दैन्यं नाम संचारी भावः। नायिका स्वीया मुग्धा च। नायकोऽनुकूलः। आत्मोपक्षेपरूपचेष्टाकृतं शृङ्गारि नर्म। आक्षेपोऽलंकारः।

(१) $D_4$ बाहुलतिका; $D_3$,Mt दोर्वल्लरी (२) $D_3$ adds वर्षाकाले इत्यर्थः (३) Mg नदीपूरेणैव (४) $D_3$,$D_4$,Mg,Mt मध्या च (५) Mg,Bm drop शृङ्गारि; $D_1$ आत्मोपक्षेपरूप शृङ्गारि नर्म; $D_3$ आत्मोपक्षेपं शृङ्गारि नर्म

सखी नायकमुपालभते—

विरहविषमः कामः कामं तनुं तनुते तनुं
दिवसगणनादक्षः स्वैरं व्यपेतघृणो यमः।
त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे
किसलयमृदुर्जीवेदेवं कथं प्रमदाजनः॥ ५४॥

(a) $D_5$,O,Oa,T,U,Mg,Bm,Mt कुरुते (b) $D_5$ दक्षश्चायं; T स्वैरव्यपेत° (c) $D_4$ त्वमिह

The God of love, who indulges his spite through ( our ) separation, makes the body extremely thin; the god of death, who is wilfully merciless is adept in the counting of days; and thou, too, my lord, art susceptible to the disease of sulking; think how shall women, tender as young shoots, remain alive ! (54)

कामो मन्मथः विरहविषमः सन् विरहे विप्रयोगे विषमो वक्रः क्रूरः इत्यर्थः । कामं प्रकामं तनुं शरीरं तनुं कृशां तनुते विधत्ते । यमः कृतान्तः स्वैरं यथेच्छं व्यपेतघृणः सन् अपगतदयः सन् दिवसगणनादक्षः दिनसंख्यान-पटुः मारणव्यग्रः इत्यर्थः । हे नाथ स्वामिन् त्वमपि मानव्याधेः[६] मानः ईर्ष्याकोपः सः एव व्याधिरामयः तस्य । तस्या नायिकाया इति शेषः । वशगः वशवर्ती मानव्याधिं शमयितुं नोद्युक्त इत्यर्थः । एवं इत्थं सति किसलयमृदुः प्रवालकोमलः प्रमदाजनः कान्ताजनः कथं केन प्रकारेण जीवेत् प्राणान् धारयेत् । विचिन्तय विचारयेति संबन्धः । एवं कथं जीवेत् विचिन्तयेत्य-नेन औदासीन्यं विहाय शीघ्रमेव तां प्रसाद्य कृतार्थां कुरुष्वेत्यभिप्रायः । अत्र संज्वरो नाम दशाविशेषोऽवगन्तव्यः । अत्र नायिका स्वीया मध्या च । किं च कलहान्तरिता । नायकः शठधृष्टयोरन्यतरः । मानकृतो विप्रलम्भशृङ्गारः । अत्र सोपालम्भवचनं नर्म । आक्षेपालंकारः ।

( १ ) Mg अल्पं ( २ ) $D_5$ कुरुते धत्ते ; Mt, Mg कुरुते विधत्ते ( ३ ) $D_3$ विदधाति ( ४ ) $D_4$ explains कालः ( ५ ) $D_6$ दिवससं० ( ६ ) $D_4$ मानव्याधेः ईर्ष्याकोपरूपस्यामयस्य नायिकाया इति शेषः ( ७ ) $D_4$ कृतार्थीकुरुष्व ( ८ ) $D_3$ drops the sentence

नायकोक्तिः—

परिम्लाने माने मुखशशिनि तस्याः करधृते
मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे ।
तदा पक्ष्मप्रान्तव्रजपुटनिरुद्धेन सहसा
प्रसादो बाष्पेण स्तनतटविशीर्णेन कथितः ॥ ५५ ॥

( a ) $D_5$ तया पक्ष्मप्रान्ताध्वजपटमुखे रुद्ध सहसा

When her anger was mollified, and she had rested her moon-like face in the palm of her hand, when I had exhausted every means ( of conciliation ), and throwing myself at her feet remained the only recourse for me, she proclaimed to me all of a sudden her favour through a stream of tears, which, until then held back in the cavity of the thick border of her eye-lashes, presently split asunder on her high bosom. (55)

क्षीणोपाये विगलितसामाद्युपाये मयि प्रणिपतनमात्रैकशरणे सति प्रणिपतनमात्रं प्रणाम एव एकं मुख्यं शरणं यस्य तथोक्तः तस्मिन् सति । माने तस्याः कोपे परिम्लाने सति श्लथे सति तस्या मुखशशिनि वदनचन्द्रे करधृते सति हस्तधारिते सति तदा तदानीं पक्ष्मप्रान्तव्रजपुटनिरुद्धेन पक्ष्मणां प्रान्ताः अग्राणि तेषां व्रजः समूहः स एव पुटः पात्रं तेन निरुद्धः वारितस्तेन । स्तनतटविशीर्णेन कुचप्रान्तझर्झरेण बाष्पेणाश्रुणा सहसा शीघ्रं प्रसादः प्रसन्नता कथितः उक्तः इति संबन्धः । कोपभावशान्तिः । नायिका स्वीया मध्या च । नायकः शठः । जातिरलंकारः ।

( १ ) $D_6$, Mg, Bm, Mt विगतसामाद्युपाये ( २ ) $D_4$ अक्षिलोमाग्रसमूह एव पुटः प्रान्तं तेन निरुद्धेन वारितेन ; Bm पक्ष्माग्रसमूहपात्रनिरुद्धेन ( ३ ) $D_3$ मुग्धा च

नायको नायिकामुपालभते—

कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनमप्यालपसि च ।
न दृष्टिः शैथिल्यं भजत इति चेतो दहति मे
निगूढान्तःकोपे कठिनहृदये संवृतिरियम् ॥५६॥

( b ) O °स्याज्ञा दत्ता प्र°; Bm प्रतिवचनमप्यादृतवती ( d ) O, Oa, T, U, S, Bm संप्रति°

That you rose to greet me with sweet smiles, while I was still far away ; that you received my commands respect-

fully (on your head), that you gave a reply and that your eye showed no flinching, – for all this my heart burns within me ; you hard-hearted one that conceal your anger in your heart, all this is only dissimulation. (56)

दूरादेव दूरत एव स्मितमधुरं मन्दहासमनोहरं यथा भवति तथा अभ्युद्गमनविधिः प्रत्युत्थानाचरणं कृतो विहितः । किं च आज्ञा मम शासनं शिरसि मस्तके न्यस्ता विहिता । यद्यदुक्तं तत्तदङ्गीकृतमित्यर्थः । किं च प्रतिवचनमुत्तरमप्यालपसि च ब्रवीषि च मयि भाषमाणे सतीति शेषः । तथापि दृष्टिर्दर्शनं शैथिल्यं श्लथतां न भजते न प्राप्नोति इति यत् कोपदार्ढ्यं न जहातीत्यर्थः । तच्छैथिल्याभजनं मे मम चेतो दहति चित्तं संतापयति । हे निगूढान्तःकोपे निगूढो गुप्तोऽन्तःकोपो यस्याः सा तथोक्ता तस्याः संबुद्धिः । कठिनहृदये निष्ठुरचित्ते इयं पूर्वोक्ताभ्युद्गमादिः संवृतिराकारगोपनमिति संबन्धः । अवहित्थं नाम संचारी भावः । नायिका स्वीया धीरा प्रगल्भा च । नायकः शठः । अत्र सोपालम्भवचनं नर्म । सूक्ष्मोऽलंकारः ।

( १ ) Bm दरहासमधुरं ; Mg हासमधुरं ( २ ) Mt यद्यथोक्तं तत्तथाङ्गीकृतं ( ३ ) $D_4$ गुप्तान्तरकोपे ( ४ ) $D_3$ धीराधीरा ; $D_6$ अधीरा

स्वाभिलाषं प्रियाय निवेदयितुमसमर्था विषण्णा नायिका धात्रीमाह—

आस्तां विश्वसनं सखीषु विदिताभिप्रायसारे जने
तत्राप्यर्पयितुं दृशं सललितां शक्नोमि न व्रीडया ।
लोको ह्येष परोपहासचतुरः सूक्ष्मेङ्गितज्ञोऽप्यलं
मातः कं शरणं व्रजामि हृदये जीर्णोऽनुरागानलः ॥५७॥

(c) $D_3$,$D_5$, O, Bm, Mg, Mt लोकोऽप्येष ; T सूक्ष्मेङ्गितज्ञाप्यलं

Friends I dare not trust ; and my shyness prevents me from turning my playful glance towards him who well knows the very core of my desire ; the folk around are clever at making fun of others and very adept in divining

the meaning of the minutest gestures ; Oh mother, to whom may I look for succour ? The fire of love dies in the heart ( itself ). (57)

सखीषु वयस्यासु विश्वसनं विश्वासः आस्तां तिष्ठतु । विश्वासो नास्तीत्यर्थः । विदिताभिप्रायसारे अभिप्रायः आशयस्तस्य सारः(१) तस्मिन् । विदितो ज्ञातोऽभिप्रायसारो येन सः तथोक्तस्तस्मिन् । परेङ्गितविशेषज्ञे इत्यर्थः । सललितं सविलासं भावगर्भितामित्यर्थः । दृशं दृष्टिमर्पयितुं प्रयोक्तुमपि व्रीडया लज्जया न शक्नोमि न क्षमास्मि । हि यस्मात् एष लोको जनः परोपहासच्चतुरः परापवादनिपुणः । किं चालसत्वथ सूक्ष्मेङ्गितज्ञोऽपि निगूढा भिप्रायवेदी च । तस्माद्व्रीडया न शक्नोमि इत्यनुसंधेयम् । हे मातः हे अम्ब कं शरणं रक्षकं व्रजामि गच्छामि । शरणं नास्तीत्यर्थः । तस्मादनुरागानलः प्रणयाग्निः हृदये मनसि जीर्णः शान्त इति संबन्धः । अत्रानुरागस्य अनलत्व-निरूपणं सन्तापकारित्वात् । अत्र परकीया नायिका । कस्मिन्नपि जने अनुरागं विधाय तं सावरणसंधिदृष्टिसंधिभ्यामावर्जमितुमक्षमा भूत्वा कं शरणं व्रजामि अनुरागानलो जीर्ण इति धात्र्याः पुरतः स्वावस्थाप्रकटनेन त्वमेव शरणं नान्यदिति स्वाभिप्रायं सूचितवतीत्यभिप्रायः । दूतीमुखेन संधानं सावरणसंधिः । स्वयमेव दृष्ट्वा संधानं दृष्टिसंधिः । आस्तां विश्वसनं सखी-ष्वित्यत्र प्रियं प्रति प्रेषिताः सख्यः स्वयमेव तत्र रतिं कृतवत्यः विश्वासाभावात् सावरणसंधेर्व्यर्थता दर्शिता । लोकतो व्रीडया प्रिये दृष्टिमर्पयितुं न शक्नोमीत्यत्र दृष्टिसंधेरपि असंभवो दर्शितः । अत्र विषादो नाम संचारी भावः । यथोक्तं—
कार्यानिस्तरणादेव व्यापत्त्या राजदोषतः । चौर्यग्रहाद्विषादः स्यान्मनसः सत्त्वहीनता ॥ वैमनस्यमनुत्साहः सृक्किण्योः परिलेहनम् । उपायान्वेषणं मूर्च्छा श्वसितं मुखशोषणम् ॥ शयनं ध्यानमित्यादिरनुभावो भवेदिहेति । संज्वरो नाम नवमी दशा । चक्षुःप्रीतिर्मनःसङ्गः संकल्पोऽथ प्रलापिता । जागरः कार्श्यमरतिर्लज्जात्यागोऽथ संज्वरः ॥ उन्मादो मूर्च्छनं चैव मरणं चरमं विदुरिति । अयोगविप्रलम्भशृङ्गारः । आत्मोपक्षेपरूपं शृङ्गारि नर्म । जातिरलंकारः ।

( १ ) $D_2$,$D_3$,$D_4$,$D_5$ Bm, Mg, Mt, add तत्र तस्मिञ्जने स्वप्रेमा-लम्बनभूते पुरुषे इत्यर्थः । ( २ ) Mg नष्टः ( ३ ) $D_6$ संगतिं

सखीभिर्मानकरणाय बोधिता नायिका स्वस्या असामर्थ्यं ताभ्यो निवेदयति—

श्रुत्वा नाम प्रियस्य स्फुटघनपुलकं जायते यत्समन्तात्
दृष्ट्वा यस्याननेन्दुं भवति वपुरिदं चन्द्रकान्तानुकारि ।
तस्मिन्नागत्य कण्ठग्रहनिकटपदस्थायिनि प्राणनाथे
भग्ना मानस्य चिन्ता भवति मम पुनर्वज्रमय्याः कथंचित् ॥५८॥

(a) $D_1$,$D_2$,$D_3$,$D_6$ O, Mg, Bm, Mt नामापि यस्य (b) O भवति पुनरिदं ; T चन्द्रकान्तोऽनुकारि ; Oa,S,Bm, Mt ॰कान्तानुसारि (d) $D_3$ मयि पुनर्वज्रमय्यां

When I hear the name of my dearest one, the hair bristle thickly all over my body ; when I see his moon-like face, this my body behaves like the oozing moon-stone ; and when he comes and steps close enough to hold me in a passionate embrace, the thought of sulkiness vanishes from my adamant heart. (58)

यस्य प्रियस्य नाम नामधेयं श्रुत्वा निशम्यापि वपुः यद्यस्मात्कारणात् समन्तात् सर्वतः स्फुटघनपुलकं व्यक्तसान्द्ररोमाञ्चं जायते भवति । किं च यस्याननेन्दुं मुखचन्द्रं दृष्ट्वावलोक्य इदं वपुरेतच्छरीरं चन्द्रकान्तानुकारि चन्द्रकान्तमनुकरोतीति चन्द्रकान्तानुकारि तद्वत् स्विन्नं भवतीत्यर्थः । तस्मात् तस्मिन् प्राणनाथे प्राणेश्वरे आगत्य कण्ठग्रहनिकटपदस्थायिनि सति कण्ठस्य गलस्य ग्रहो ग्रहणमालिङ्गनमित्यर्थः । तस्य निकटपदं समीपस्थानं तत्र तिष्ठतीति स्थायि तस्मिन् कथंचित् केनापि प्रकारेण वज्रमय्या कुलिशसदृश्याः आरोपितकाठिन्यायाः इत्यर्थः । मम पुनर्मानस्य कोपस्य चिन्ता स्मृतिर्भग्ना विहता भवति कथं मानः क्रियते । पुनःशब्दो वाक्यालंकारे । अत्र अपराधिनि प्रिये तस्मिन् अवश्यं मानः कर्तव्य इति प्रोत्साहिता सती आत्मनः असामर्थ्यं नायिका कथयतीत्यभिप्रायः । अत्र नायिका स्वीया मध्या च । नायकः शठः । आत्मोपक्षेपरूपं शृङ्गारि नर्म । जातिरलंकारः ।

( १ ) Mg adds आपादकेशं व्यक्तनिबिडरोमाञ्चं भवति । विस्पष्ट-नीरन्ध्ररोमाञ्चा तनुरियं स्वयमेव हठादनुरक्ता भवतीत्यर्थः । ( २ ) $D_1$,$D_2$, Mg add समेत्य after आगत्य ( ३ ) $D_4$ बोधिता ( ४ ) $D_2$,$D_6$ मुग्धा च ।

अत्यन्तं कुपितां नायिकां मुहुर्मुहुरनुनीय विफलप्रयत्नेन नायकेन भेदं प्रापिता सखी तामुपालभते —

**सन्त्येवात्र गृहे गृहे युवतयस्ताः पृच्छ गत्वाऽधुना**
**प्रेयांसः प्रणमन्ति किं तव पुनर्दासो यथा वर्तते ।**
**आत्मद्रोहिणि दुर्जनप्रलपितं कर्णे भृशं मा कृथाः**
**च्छिन्नस्नेहरसा भवन्ति पुरुषा दुःखानुवृत्त्या यतः ॥ ५९ ॥**

( c ) $D_5$ कर्णेऽनिशं ; O, Oa दुर्जनः प्रलपितैः

In every house, here, there are young women (like thee); go and ask them whether their lovers bow down to them as this thy slave does. Oh thou, thyself thy enemy, do not lend thy ear to the wild prattle of the wicked : for by the repetition of painful experience, love's savour is apt to pall on men. ( 59 ).

अत्रास्मिन्नगरे गृहे गृहे प्रतिगृहं युवतयः तरुण्यः सन्ति विद्यन्त एव । अधुना इदानीं गत्वा ताः पृच्छ प्रियोपचारप्रकारमिति शेषः । प्रेयांसः प्रियतमाः प्रणमन्ति किं प्रेयसीरिति शेषः । तव प्रेयान् पुनः प्रियतमस्तु यथा प्रेष्य इव वर्तते चरति । आत्मद्रोहिणि आत्मने स्वस्मै द्रुह्यति अपराध्यति इत्यात्मद्रोहिणी तस्याः संबुद्धिः । दुर्जनप्रलपितं पिशुनजल्पितं कर्णे श्रवणे भृशं दृढं मा कृथाः मा कुरुष्व । यतः यस्मात्कारणात् पुरुषाः दुःखानुवृत्त्या दुःखस्यानुवृत्तिः अनुवर्तनं तया खेदानुसंधानेन अनुनयवैय्यर्थ्यजनितखेदानु-बन्धेनेत्यर्थः । छिन्नस्नेहरसाः गलितप्रेमगुणा भवन्तीति संबन्धः । पुरुषाः छिन्नस्नेहरसा भवन्तीत्यनेन प्रियस्य प्रेमविच्छेदे सति भवत्याः प्राणपर्यन्तानर्थो भविष्यतीति सूचितम् । अत्र नायिका स्वीया मध्या च । नायकः शठः ।

ईर्ष्यामानकृतो विप्रलम्भशृङ्गारः । अत्र सोपालम्भवचनरूपं नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_4$ आत्महिताभिज्ञे इत्यर्थः । and drops rest of the explanation ; $D_2$, Bm drop the explanation ( २ ) $D_1$, $D_4$ दुःखानुवृत्त्या खेदानुबन्धेन

कवेर्वाक्यम् —

**स्मररसनदीपूरेणोढाः पुनर्गुरुसेतुभि—**
**र्यदपि विधृतास्तिष्ठन्त्यारादपूर्णमनोरथाः ।**
**तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा**
**नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥ ६० ॥**

( a ) $D_5$ लिखितप्रायैरङ्गैः

Swept away on the flood of the river of love's passion, and held back by the dam in the form of the elders of the house, the lovers are unable to satisfy their desires, although they are in close proximity ; all the same facing each other with limbs that appear to be painted pictures, they drink the nectar ( of love ) brought to them through the lotus-stalks in the shape of their glances. ( 60 ).

प्रियाः पुमांस्त्रियेत्येकशेषः । प्रेयांसः प्रियतमाश्चेत्यर्थः । स्मररसनदीपूरेणोढाः स्मरेण कामेन कृतो रसो रागः स एव नदीपूरस्तेनोढाः उद्धृताः बलान्नीता इत्यर्थः। पुनर्भूयो गुरुसेतुभिः गुरवो गुरुजना एव सेतवः प्रवाहबन्धास्तैर्यद्यस्मात्कारणात् विधृता अपि निवारिताश्च भवन्ति । तस्मादारात्समीपे अपूर्णमनोरथाः अपर्याप्तकामाः तिष्ठन्ति आसते । तदपि तथापि लिखितप्रख्यैः चित्रसदृशैरङ्गैः शरीरैरुपलक्षिताः परस्परमन्योन्यमुन्मुखाः अभिमुखाः सन्तः नयननलिनीनालानीतं नयनानि दर्शनान्येव नलिनीनालानि पद्मकाण्डानि तैरानीतमाहृतं रसं पिबन्ति आस्वादयन्ति इति संबन्धः । स्मररसनदीपूरेणोढाः इत्यनेन अत्यन्तमभिलाषपरतन्त्रा इति गम्यते । लिखितप्रख्यैरङ्गै-

रित्यनेन स्तम्भं नाम सात्विकभावं गता इति गम्यते[3] । औत्सुक्यं नाम संचारी भावः[4]। संभोगशृङ्गारः । यथोक्तं दशरूपके--अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ । दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः ॥ अत्र चेष्टाकृतं संगेच्छारूपं शृङ्गारि नर्म । जातिलंरकारः ।

( १ ) $D_4$ explains अङ्गैरवयवैः शरीरैर्वा । ( २ ) Mt लोचनान्येव ( ३ ) $D_4$ adds स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥ इति । स्तम्भः स्यान्निष्क्रियाङ्गत्वं चिन्ताशोकज्वरादिकृत् । इति ( ४ ) Bm adds यथा दशरूपके — कालाक्षमत्वमौत्सुक्यमप्राप्तेऽभीष्टवस्तुनि । संतापः शयनं चिन्ता निश्वासो गमनोद्यमः । इत्याद्यैरनुभावैः स्यादभिनेयमिदं बुधैः ।

नायकमानेतुं गत्वा समागतां लक्ष्यमाणसंभोगचिह्नां दूतीं नायिका प्राह ।

**निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो**
**नेत्रे दूरमनञ्जनं पुलकिता तन्वी तवेयं तनुः ।**
**मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे**
**वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ ६१ ॥**

( a ) S निर्मुष्टरा० ( d ) T गतोऽसि ; S गता स ; $D_2$ ०स्यान्तिके

From thy high breasts, the sandal has completely dropped away ; from thy lower lip the red colour is wiped off ; in thy eyes not a trace of salve is left, and this skin of thy slender body ripples. Oh thou perjurer—thou messenger of love—thou who knowest not the grief thou causest to thy friend ( i. e. me ) thou didst go from here to the pond to bathe, but not to that vile one ! ( 61 ).

स्तनतटं कुचतटं निःशेषच्युतचन्दनं निःशेषं यथा भवति तथा च्युतं गलितं चन्दनं यस्मात्तत्तथोक्तम् । अधरो दशनच्छदः निर्मृष्टरागः अपगतालक्तकः अपगतताम्बूलरागो वा । नेत्रे दूरमत्यर्थं अनञ्जने कज्जलरहिते । तन्वी इयं तव तनुः पुलकिता सरोमाञ्चा । मिथ्यावादिनि असत्यप्रलापिनि

बान्धवजनस्य सुहृज्जनस्य अज्ञातपीडागमे अज्ञातः अनवगतः पीडागमो दुःखप्राप्तिः यया सा तथोक्ता तस्याः संबुद्धिः । अज्ञातबान्धवजनपीडागमे इत्यर्थः । हे दूति संदेशहरे इतः अस्मात्प्रदेशात् वापीं दीर्घिकां स्नातुं जलावगाहनं कर्तुं गतासि यातासि । अधमस्य निकृष्टस्य तस्य नायकस्यान्तिकं पुनः समीपं तु न गतासि इति संबन्धः । अत्र वापीस्नानचिह्नकथनव्याजेन संभोगचिह्नकथनाच्च नायकस्याधमत्वकथनाच्च तदन्तिकमेव रन्तुं गतासीत्ययमर्थो व्यज्यते । अत्र नायिका स्वीया प्रगल्भा च । नायकः शठः । ईर्ष्याक्रोधप्रायं नर्म । समाधिरलंकारः । यथोक्तं काव्यादर्शे – युगपन्नैकधर्माणामभ्यासश्च मतो यथेति ॥

( १ ) $D_4$ वक्ष्यमाण°; $D_5$ drops this introductory sentence ( २ ) $D_4$ कात्स्न्येंन गलितविलेपनं ( ३ ) $D_4$ तन्वी कोमला इयं etc. ( ४ ) $D_1$ वरं गन्तुं; Mg परं त्वं ( ५ ) Mg स्वीया मध्या प्रगल्भा च

नायकोक्तिः—

**म्लानं पाण्डु कृशं विलासविधुरं लम्बालकं चालसं**
**भूयस्तत्क्षणजातकान्तिमधुरं प्राप्ते मयि प्रोषिते ।**
**साटोपं रतिकेलिदत्तरभसं रम्यं किमप्यादरात्**
**पीतं यत्सुतनोर्मया मुखमिदं तत्केन विस्मार्यते ॥ ६२ ॥**

(b) $D_5$ ∘सरसं; O, Oa, U, S, T ∘कान्ति मधुरं (d) $D_5$ यत्पीतं सुतनो∘ ...वक्तुं न तत्पार्यते

Withered, pale, weak, bereft of grace, and with the tresses of its hair hanging loose, the languid face at once brightened up and looked sweet when I returned from abroad ; and what can make me forget the kisses I lovingly snatched from my beloved's mouth, which looked so proud, so bewildered during the time of love-dalliance, and forsooth so charming? ( 62 ).

पूर्वं म्लानं तान्तं पाण्डु धूसरं कृशं क्षामं विलासविधुरं विभ्रमशून्यं लम्बालकं स्रस्तकुन्तलं अलसं जडं ततः प्रोषिते देशान्तरगते मयि प्राप्ते आगते भूयः पुनः तत्क्षणजातकान्तिमधुरं तत्कालसंभूतशोभासुभगं च । ततः साटोपं सगर्वं रतिकेलिदत्तरभसं रतिक्रीडाविहितसभ्रमं किमपि रम्यं अनिर्वाच्यसौन्दर्यं च सुतनोस्तन्व्या मुखं मया आदरात् आस्थातिशयात् पीतमास्वादितमिति यत् तदिदं केन कर्मणा विस्मार्यते तिरोधीयते इति संबन्धः । अत्र नायिका स्वीया मध्या च । नायकोऽनुकूलः । जातिरलंकारः ।

( १ ) $D_4$ सद्यः संजातशोभासुभगं ( २ ) Mg रतिक्रीडोपहितसंभ्रमं ( ३ ) $D_4$ कोमलाङ्ग्याः ( ४ ) T मुग्धा ( ५ ) Mt adds after this संभोगशृङ्गारः

नायकोक्तिः —

**आयस्ता कलहं पुरेव कुरुते न स्रंसने वाससो**
**भुग्नभ्रूरतिखण्ड्यमानमधरं धत्ते न केशग्रहे ।**
**अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने**
**तन्व्या शिक्षित एष संप्रति पुनः कोपप्रकारोऽपरः ॥ ६३ ॥**

( a ) $D_2$,$D_5$, Mg कलहं पुरैव ( b ) T ॰मधरं दत्ते ( d ) $D_2$,$D_5$ संप्रति पुरः

Wearied, she does not oppose as formerly the loosening of her garment, nor as before does she, when seized by the hair, break the arch of her brow and bite her lip severely ; she willingly offers her limbs and does not repulse a forcible embrace ; O ! the fair one seems now to have learnt quite a different mode of ( showing ) anger ! ( 63 )

आयस्ता आयासं प्राप्ता ईर्ष्याकोपेनेति शेषः । पुरेव पूर्वमिव वाससो वस्त्रस्य स्रंसने मोचने कलहं विवादं न कुरुते न विधत्ते । किं च केशग्रहे केशकर्षणे पुरेव भुग्नभ्रूः भ्रूभङ्गवती सती अतिखण्ड्यमानमत्यन्तं दश्यमान-मधरं दन्तच्छदं न धत्ते न वहति । किं च हठालिङ्गने प्रसभाश्लेषे पुरेव

वामा वक्रा न भवति । किंतु अङ्गानि गात्राणि स्वयमात्मना अर्पयति प्रयच्छति । संप्रति पुनः इदानीं तन्व्या कान्तया एषोऽयमेवमपरोऽन्यः कोपप्रकारो रोषभङ्गी शिक्षितोऽभ्यस्त इति संबन्धः । अत्रावहित्थं नाम संचारी भावः । अत्र नायिका स्वीया धीरा प्रगल्भा च । नायकः शठः । ईर्ष्यामानकृतो विप्रलम्भशृङ्गारः । अत्र नर्मगर्भः । युक्तिरलंकारः ।

( १ ) Mt ईर्ष्यातिशयेनेतिशेषः । ( २ ) $D_2$,$D_5$, Mg पुरैव पूर्वमेव ( ३ ) $D_2$,$D_5$, Mg पुरैव ( ४ ) $D_2$,$D_5$, Mg पुरैव ( ५ ) $D_1$,$D_2$,-$D_5$ कोपभङ्गी ; $D_6$ रोषभङ्गी

कवेर्वाक्यम् ।

**चिन्तामोहनिबध्यमानमनसा मौनेन पादानतः**
**प्रत्याख्यातपराङ्मुखः प्रियतमो गन्तुं प्रवृत्तः शठः ।**
**सव्रीडैरलसैर्निरन्तरलुठद्बाष्पाकुलैरीक्षणै—**
**स्तन्वङ्ग्या स पुनस्तया तरलया तत्रान्तरे वारितः ॥ ६४ ॥**

( a ) $D_6$ ॰निपीड्यमानमनसा ( d ) $D_5$ श्वासोत्कम्पिकुचं निरीक्ष्य सुचिरं जीवाशया वारितः ।

With a mind overcome by bewildering care, she had silently repulsed her lover who had thrown himself at her feet, and becoming indifferent he was about to leave her ; but being impatient she held him back, in the meanwhile, with her bashful tired eyes, dim with uninterruptedly rolling tears. ( 64 ).

शठः प्रियतमः पादानतः सन् चिन्तामोहनिबध्यमानमनसा चिन्तया विचारेण कृतो यो मोहो जाड्यं तेन निबध्यमानं निगृह्यमाणं मनो यस्याः सा तथोक्ता । तया तन्वङ्ग्या मौनेन अभाषणेन हेतुना प्रत्याख्यातपराङ्मुखः प्रत्याख्यातो निरस्तः स चासौ पराङ्मुखो विमुखश्च भूत्वा गन्तुं निर्गन्तुं प्रवृत्त उद्युक्तः । तत्रान्तरे तस्मिन्नवसरे तरलया अधीरया सव्रीडैः सलज्जैः अलसैर्मन्दसञ्चारैः निरन्तरलुठद्बाष्पाकुलैः संततपरिवर्तमानाश्रुकलुषैरीक्षणै-

विलोचनैर्हेतुना पुनः स वारितः इति संबन्धः । दैन्यं नाम संचारी भावः । नायिका स्वीया मध्या च । नायकः शठः । विप्रलम्भशृङ्गारः । नर्मस्फोटः । आक्षेपोऽलंकारः ।

( १ ) $D_4$ explains विचारकृतजाड्येन गृह्यमाणचेतसा ( २ ) $D_3$, $D_4$,Mg गृह्यमाणं ( ३ ) $D_1$,$D_2$, Mt ०विलोकनैः ; $D_3$ अवलोकनैः

कवेर्वाक्यम् —

क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रिया नानावस्थं प्रथयति रतं प्रच्छदपटः ॥ ६५ ॥

( a ) $D_3$,$D_5$ ०दगुरु० ( c ) T कीर्णकुसुमैः ( d ) $D_5$,Mg स्त्रियो

Here dyed with betel-juice, there soiled by the stains of black-sandal paste, here covered with the powder of camphor, and there marked with foot-prints in lac-dye, with extensive wave-like crumplings and with scattered flowers, fallen from her hair the bed-sheet proclaims the enjoyment of the woman in various modes. (65).

क्वचिदेकत्र ताम्बूलाक्तः ताम्बूलरसेन रञ्जितः । क्वचिदेकत्रागुरुपङ्काङ्कमलिनः अगरोः पङ्कः तस्याङ्को लक्ष्म तेन मलिनो मलीमसः । क्वचिदेकत्र चूर्णोद्गारी चूर्णस्य कर्पूरादिक्षोदस्य उद्गारः गलनं सोऽस्मिन्नस्तीति चूर्णोद्गारी । अत इनिठनाविति मत्वर्थ इनिप्रत्ययः । क्वचिदपि कुत्रापि च सालक्तकपदः । अलक्तकेन लाक्षया सहितं सालक्तकं पदं पादमुद्रा यस्मिन्स तथोक्तः । वलीभङ्गाभोगैः वल्यः एव भङ्गाः तरङ्गाः तेषामाभोगाः विस्ताराः तैश्च । अलकपतितैः अलकेभ्यः पतितानि अलकपतितानि तैः शीर्णकुसुमैः शीर्णानि विकीर्णानि च तानि कुसुमानि च शीर्णकुसुमानि तैश्चोपलक्षितः प्रच्छदपटः आस्तरणवस्त्रं स्त्रियाः कान्ताया नानावस्थं बहुप्रकारावस्थानं रतं

निधुवनं प्रथयति ख्यापयति इति संबन्धः । अत्र क्वचित्ताम्बूलाक्त इत्यनेन मार्जारकरणं सूचितम् । यथोक्तं रतिरहस्ये—प्रसारिते पाणिपादे शय्यास्पृशि मुखोरसि । उन्नतायां स्त्रियाः कट्यां मार्जरकरणं विदुरिति । क्वचिदगरुपङ्काङ्कमलिन इत्यनेन करिपदबन्धविशेषः सूच्यते । यथोक्तं रतिरहस्ये–भूगतस्तनभुजास्यमस्तकामुन्नतस्फिजमधोमुखीं स्त्रियम् । क्रामति स्वकरगृह्यमेहने वल्लभे करिपदं तदुच्यते ॥ इति । क्वचिच्चूर्णोद्गारीत्यनेन धेनुकं नाम करणमुच्यते । यथोक्तं – न्यस्तहस्तयुगला भुवस्थले योषिदेति कटिरूढवल्लभा । अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदुन्नते प्रिये ॥ इति । क्वचिदपि च सालक्तकपदः इत्यनेन पुरुषायितं सूच्यते । तत्स्पष्टमेव । वलीभङ्गैरित्यनेन च अलकपातैः शीर्णकुसुमैरित्यनेन च रत्युपमर्दातिशयः सूच्यते । जातिरलंकारः ।

(१) $D_4$ explains वीटिकारसेन (२) $D_4$ explains कृष्णागरुकर्दमचिह्नेन मलीमसः (३) $D_4$ explains लाक्षासहितपदमुद्रायुक्तः (४) $D_4$ आस्तीर्णवस्त्रं (५) $D_1$,$D_2$,$D_5$ बहुप्रकारावस्थं रतं रमणं प्रथयति ; $D_3$ बहुप्रकारं रतं प्रथयति ; Mt बहुप्रकारान्तरावस्थं रतं सुरतं प्रथयति (६) $D_1$,$D_2$,$D_4$,Bm,Mt ऐभो (ऐभ्यो $D_2$) नाम बन्ध० ; Mg इभो नाम बन्ध० ; $D_4$ करिपदाख्यो बन्ध० (७) $D_1$,$D_2$, Bm, Mg करिपदैभमुच्यते ; $D_3$ करिवदैभमुच्यते (८) $D_3$ रत्यां प्रेमार्द्रातिशयः (९) $D_3$ adds after this :— नायिका स्वीया प्रौढा च । नायकोऽनुकूलः । संभोगशृङ्गारः । सुहृन्नर्म (?) जातिरलंकारः ।

नायकेन प्रलोभिता नायिका सखीमाह —

अहं तेनाहूता किमपि कथयामीति विजने
　　समीपे चासीना सरलहृदयत्वादवहिता ।
ततः कर्णोपान्ते किमपि वदताघ्राय वदनं
　　गृहीत्वा धम्मिल्लं मम सखि निपीतोऽधररसः ॥ ६६ ॥

(a) $D_6$ तेनाह्वाता (b) $D_2$,$D_5$ सरसहृ° ; Bm तरलहृ०

"I have a word for thee," he said and drew me to a lonely spot; and in the innocence of my heart, I sat close to him and was attentive; then whispering something in my ear and smelling my mouth be caught hold of the braid of my hair and sipped the nectar from my lips. (66)

अहं तेन धूर्तेन विजने रहसि किमपि कथयामि इति यत्किञ्चिद् वदामी-त्याहूता आकारिता समीपे आसीना उपविष्टा च सरलहृदयत्वात् अकुटिल-चित्तत्वादवहिता एकाग्रचित्तास्मि । ततस्तदनन्तरं कर्णोपान्ते श्रवणान्तिके किमपि यत्किञ्चिद् वदता कथयता तेन वदनं मुखमाघ्राय धम्मिलं केशबन्धं गृहीत्वा आदाय हे सखि ममाधररसो निपीतः आस्वादित इति संबन्धः । नायिका स्वीया मुग्धा च । नायकोऽनुकूलः । अत्र नर्मगर्भः । युक्तिर-लंकारः ।

( १ ) Bm तरलहृदयत्वात् आकुलचित्तत्वात् ; $D_2$ सरसहृदयत्वात् अवहिता ( २ ) $D_3$ श्रवणोपान्ते ; $D_4$ मञ्छ्रवणनिकटे ; Mt श्रवणसमीपे ( ३ ) $D_4$ मम कबरीं ( ४ ) $D_1$,$D_4$ मध्या च ; $D_2$,Bm मुग्धा मध्या च

कवेर्वाक्यम् —

पुष्पोद्भेदमवाप्य केलिशयनाद्दूरस्थया चुम्बने
कान्तेन स्फुरिताधरेण निभृतं भ्रूसंज्ञया याचिते ।
आच्छाद्य स्मितपूर्णगण्डफलकं चेलाञ्चलेनालसं
मन्दान्दोलितकुण्डलस्तबकया तन्व्या विधूतं शिरः ॥ ६७ ॥

( a ) O ॰शयनादुत्थाय दूरस्थया ( b ) $D_5$,$D_6$ स्फुरताधरेण ; $D_5$ रभसं ( c ) $D_5$ स्मितचारुगण्ड॰ ; $D_1$,$D_2$,$D_6$ चैलाञ्चले॰ ( d ) $D_1$, $D_3$,$D_6$ तन्व्यावधूतं

As, feeling a sudden flux, she stood away from the bed of pleasure, the husband made a gesture of his eye-brow and secretly asked for a kiss with his quivering lip : so

covering her face, whose orbed cheeks were radiant with smiles, with the skirt of her garment, while the clustering pendants in her ears gently dangled, the slender one shook her head. (67).

पुष्पोद्भेदं रजःप्रादुर्भावमवाप्य प्राप्य केलिशयनाद्दूरस्थया क्रीडातल्पं विहाय विप्रकृष्टया। ल्यब्लोपे पञ्चमी। स्फुरिताधरेण स्पन्दिताधरेण कान्तेन प्रियेण भ्रूसंज्ञया साधनेन निभृतं निगूढं चुम्बने याचिते प्रार्थिते सति स्मितपूर्णगण्डफलकं मन्दहासभरितकपोलतलमाननं चेलाञ्चलेन अंशुकपल्लवेनाच्छाद्य पिधाय मन्दान्दोलितकुण्डलस्तबकया मन्दं शनैः आन्दोलिते आलोलिते कुण्डले कर्णवेष्टने एव स्तबकौ गुच्छौ यस्याः सा तथोक्ता। तन्व्या कान्तया शिरो विधूतं तिर्यग्वलितमिति संबन्धः। शिरो विधूतमित्यनेन प्रतिषेधः सूचितः। औत्सुक्यं नाम संचारी भावः। नायिका स्वीया मध्याप्रगल्भयोरन्यतरा। स्वाधीनपतिका च। नायकोऽनुकूलः। संभोगशृङ्गारः। अत्र चेष्टाकृतं संगेच्छारूपं शृङ्गारि नर्म। सूक्ष्मोऽलंकारः। यथोक्तं काव्यादर्शे—'इङ्गिताकारलक्ष्योऽर्थः सौक्ष्म्यात्सूक्ष्म इति स्मृतः' इति।

(१) $D_4$ स्पन्दितोष्ठेन (२) $D_1$,$D_3$,$D_6$, Bm दरहास०; Mg मन्दहासपूरित० (३) $D_1$,$D_2$,$D_6$ चैलाञ्चलेन (४) $D_6$ कनकवेष्टने (५) $D_1$,$D_3$,$D_6$ शिरोऽवधूतं (६) $D_1$ तिर्यक् चलितं ; $D_4$ तिर्यक्कृतम्० (७) $D_1$,$D_3$,$D_6$ शिरोऽवधूतं

सखी नायिकामाह—

क्व प्रस्थितासि करभोरु घने निशीथे
प्राणेश्वरो वसति यत्र मनःप्रियो मे।
एकाकिनी वद कथं न बिभेषि बाले
नन्वस्ति पुङ्खितशरो मदनः सहायः॥ ६८॥

(b) $D_6$ प्राणप्रियो...जनः प्रियो मे

" Whither hurriest thou, Oh fair one (lit. trunk-thighed one) at this murky midnight?" " There, where my love

tarries, he who is the lord of my life, so dear to my heart." How is it, Oh young woman, that thou art not afraid though thou art alone?" "The God of love, with his feathered arrows, is my companion." ( 68 ).

हे करभोरु करभाविव ऊरू यस्याः सा करभोरुः तस्याः संबुद्धिः। ऊरूत्तरपदादौपम्य इति ऊङ् प्रत्ययः। मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः। घने निबिडतमसीति शेषः। निशीथेऽर्धरात्रे क्व कुत्र प्रस्थितासि प्रयातासि। एवं सख्या पृष्टा नायिका तां प्रत्याह– मे मनःप्रियः मनसो हृदयस्य प्रियः अभीष्टः प्राणेश्वरः प्राणनाथो यत्र यस्मिन्प्रदेशे वसति तिष्ठति तत्र गच्छामीति शेषः। मनःप्रियः प्राणेश्वर इत्यर्थः। अर्थपौनरुक्त्यमास्थातिशयेन। ततः सखी तामाह– हे बाले वत्से, एकाकिनी असहाया त्वं कथं केन प्रकारेण न बिभेषि न त्रससि वद ब्रूहि। ततः सा सखीमाह– पुङ्खितशरः संहितबाणो मदनः कामः सहायः सहचरः अस्ति ननु विद्यते खलु। व्यक्त एवाभिप्रायः। नायिका परकीया। किंचाभिसारिका। यथा भारतीये—हित्वा लज्जां समाकृष्टा मदनेन मदेन च। अभिसारयते कान्तं सा भवेदभिसारिका॥ अत्र सहास्यं शृङ्गारि नर्म। हेतुरलंकारः।

( १ ) $D_1$,$D_2$,$D_5$ करभः करबहिः प्रदेशः स इव ऊरू यस्याः सा। ( २ ) $D_4$ मनःप्रियः प्राणेश्वर इत्यर्थपौनरुक्त्यं आस्थातिशयेन

( अयं श्लोकोऽत्र प्रक्षिप्त इति बहवः। –रामानन्द॰ )

नायिकया पूर्वं निवारितस्य प्रतिकूलनायिकागृहागतस्याप्युल्लंघिततदाज्ञस्य नायकस्य चरितं प्रतिकुपिताया नायिकायाश्च व्यापारं कविराह–

लोलभ्रूलतया विपक्षदिगुपन्यासे विधूतं शिर–
स्तद्वृत्तान्तविदीक्षणे कृतनमस्कारो विलक्षः स्थितः।
ईषत्ताम्रकपोलकान्तिनि मुखे दृष्ट्या नतः पादयो–
रुत्सृष्टो गुरुसन्निधावपि विधिर्द्वाभ्यां न कालोचितः॥ ६९॥

( a ) $D_6$ ॰न्यासेऽवधूतं ( b ) $D_5$ ॰निरीक्षणे ( c ) $D_5$ कोपात्ताम्रविलोलकान्तिनि ; O दृष्ट्वा

He shook his head when by the dance of her eye-brow she suggested the direction of (the house of ) her rival, and marking ( the attitude of ) those who were witnesses to this scene, he bowed low and stood aside perplexed; when her cheeks glowed with the flush of anger, his glance was bent on her feet; ( thus ) even in the presence of the elders, the couple did not give up their attitude befitting the occasion. (69)

नायिकाया लोलभ्रूलतया कम्पमानभ्रूवल्ल्या साधनेन विपक्षादिगुपन्यासे प्रतिकूलरमणस्थाननिर्देशे सति नायकेन शिरो विधूतम् । ततस्तया तद्वृन्तान्तविदीक्षणे स चासौ वृत्तान्तो व्यापारः तं वेत्ति इति तद्वृत्तान्तवित् सख्यादिस्तस्येक्षणमवलोकनं तस्मिन् कृते सति ततो नायकः कृतनमस्कारः कृतनमस्कृतिर्भूत्वा विलक्षः किंकर्तव्यतामूढः सन् स्थितस्तस्थौ । ततस्तस्या मुखे ईषत्ताम्रकपोलकान्तिनि अल्पारुणगण्डद्युतौ सति ततो नायकः दृष्ट्या दृशा पादयोः नतः नम्रः । एवं द्वाभ्यां स्त्रीपुरुषाभ्यां गुरुसन्निधौ गुरुजनसमक्षेऽपि कालोचितः अवसरोचितो विधिः कृत्यं नोत्सृष्टः न त्यक्तः । निर्वर्तित इत्यर्थः । इति संबन्धः । अत्र विपक्षादिगुपन्यास इत्यनेन त्वं तस्या गृहं गत इत्ययमर्थः सूचितः । शिरो विधूतमित्यनेन तद्गृहं प्रति न गतोऽस्मीति ज्ञापितं भवति । तद्वृत्तान्तविदीक्षण इत्यनेन अनया सख्या तत्रापराधो दृष्ट इति सूचितम् । कृतनमस्कारो विलक्षः स्थित इत्यनेनै मद्वृत्तान्तोऽनया साक्षिपुरःसरं ज्ञात इति परं कथमपलापयितुं शक्यमित्यपराधोऽङ्गीकृत इति सूचितम् । ईषत्ताम्रकपोलकान्तिनि मुखे इत्यनेनै कोपः सूचितः । दृष्ट्या नतः पादयोरित्यनेन अहमपराधी क्षमस्वेति सांत्वनं सूचितम् । गुरुसंनिधावपि कालोचितो विधिर्नोत्सृष्ट इत्यनेन तदानीमनुचितोऽपि ईर्ष्यामानश्च तत्प्रशमनप्रकारश्च स्ववैदग्ध्यान्निगूढं निर्वर्तित इत्यभिप्रायः । अत्र नायिका स्वीयाँ प्रगल्भा च । नायकः शठः । विप्रलम्भशृङ्गारः । अत्र चेष्टाकृतमीर्ष्याक्रोधप्रायं नर्म । जातिरलंकारः ।

( १ ) D, नायिकया पूर्वं निवारितः स पुनः प्रतिकूलनायिकागृहगमनसमुल्लंघिततदाज्ञस्य तं प्रति कुपिताया नायिकायाश्च व्यापारं कविराह । Mt

drops the sentence altogether ( २ ) $D_2$,$D_6$ शिरोऽवधूतं ; Mt adds कम्पितं after विधूतं ( ३ ) $D_3$ °द्युति ; it should be °द्युतिनि ( ४ ) $D_6$ कृतिः ( ५ ) $D_6$ Bm, Mt read इत्यनेन स्मृत्वाऽपराधोऽङ्गीकृत इति सूचितं ( ६ ) $D_3$ reads तया तस्मिन्नपराधमारोप्य कुपितमिति ज्ञापितं भवति । ( ७ ) Mt स्वीया मध्या प्रगल्भा च

प्रणयकोपव्याजेन यत्र कुत्रापि जिगमिषन्तं नायकमुत्प्रेक्ष्य तस्य गमनमसहमानाया नायिकाया व्यापारं कविराह —

**दृष्टः कातरनेत्रया चिरतरं बद्ध्वाञ्जलिं याचितः**
**पश्चादंशुकपल्लवे च विधृतो निर्व्याजमालिङ्गितः ।**
**इत्याक्षिप्य समस्तमेवमघृणो गन्तुं प्रवृत्तः शठः**
**पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥ ७० ॥**

( b ) Mg °दंशुकपल्लवेन विधृतो ( c ) S समस्तमेतदघृणो ( d ) $D_2$ यदि तया मुक्तस्त°; T प्राणपरिग्रहे द°

She looked at him for a long time with timid eyes ; she besought him with folded hands ; then she held him fast by the edge of his garment and embraced him without any reserve ; but when the hard-hearted villain, rejecting all this, prepared to go away, the beloved first of all renounced all hope of life and then her lover. (70)

कातरनेत्रया दीनदृष्टया नायिकया चिरतरं सुचिरं दृष्टः । ततोऽञ्जलिमञ्जलिहस्तं बद्ध्वा संयम्य याचितः प्रार्थितः पश्चात्तदनु अंशुकपल्लवे चेलाञ्चले च विधृतो गृहीतस्ततो निर्व्याजं निष्कपटं यथा भवति तथा आलिङ्गित आश्लिष्ट इति इत्थंभूतं समस्तं दर्शनादिकमाक्षिप्य निरस्य एवमनेन प्रकारेण शठो धूर्तोऽघृणो निर्दयः सन् गन्तुं प्रवृत्तः निर्गमनायोद्युक्तः । ततस्तया दयितया पूर्वं प्रथमं प्राणपरिग्रहः प्राणानामसूनां परिग्रहः अवलम्बनं जीविताशेत्यर्थः । मुक्तो विसृष्टस्ततोऽनन्तरं वल्लभो मुक्त इति संबन्धः । दृष्टः कातरनेत्रयेत्यनेन नायिकाया दैन्यं सूचितम् । बद्ध्वाञ्जलिं याचित इत्यनेन

तस्या दैन्यं विदित्वापि नानुकूल्यं गत इति सूचितम् । अंशुकपल्लवे विधृत इत्यनेन याच्ञा निष्फलीकृतेति ज्ञायते । निर्व्याजमालिङ्गित इत्यनेनांशुकपल्लव-मालावलम्बनेन निवारितुं न शक्यत इति ज्ञायते । पूर्वं प्राणपरिग्रहो मुक्तस्ततो वल्लभ इत्यनेन तस्या रागातिशयः सूचितः । दैन्यं नाम संचारी भावः । नायिका स्वीया मध्या च । नायकः शठः । विप्रलम्भशृङ्गारः । अत्र चेष्टाकृतं संगेच्छारूपं शृङ्गारि नर्म । आक्षेपोऽलंकारः ।

( १ ) Bm,Mt जिगामिषुं ( २ ) D,,Mg,Bm, Mt अञ्जलिं हस्तं बद्ध्वा ( ३ ) Mg ज्ञापयति ।

कवेर्वाक्यम् —

**लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले**
**वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।**
**दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो**
**लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥७१॥**

A mark of lac-dye on both sides of the forehead, the impress of the arm-band on the neck, the dark spots of collyrium on the face, the colour of the betel standing pre-eminent on the eyes–after the gazelle-eyed one, in the early morning, had long looked at such anger-exciting ornaments of the lover, her sighs got smothered in the chalice of the lotus which she gaily sported in her hand. (71)

ललाटपट्टमभितः भालफलकप्रान्तेषु । अभितः परित इत्यादिना द्वितीया । लाक्षालक्ष्म अलक्तकलाञ्छनम् । गले कण्ठे केयूरमुद्राङ्गदाङ्कनम् । वक्त्रे मुखे कज्जलकालिमा अञ्जनमालिन्यं नयनयोस्ताम्बूलरागः ताम्बूलरक्तिमा अपर इतरो रागश्च निद्राच्छेदजनित इत्यर्थः । प्रातरुषसि प्रेयसः प्रियतमस्य कोपविधायि कोपकारि इदं पूर्वोक्तं मण्डनं सम्भोगचिह्नरूपमलंकारं चिरं दृष्ट्वा स्थितायाः मृगदृशो हरिणेक्षणायाः श्वासाः । श्वासशब्देनात्र रोषातिशय-जनिताः श्वासोश्वासाः कथ्यन्ते । लीलातामरसोदरे लीलाकमलगर्भे समाप्तिमव-

सानं गता इति संबन्धः । अत्र लाक्षालक्ष्म ललाटपट्टमभित इत्यनेन नायकेन कृतः प्रतिनायकाचरणप्रणामो गम्यते । केयूरमुद्रा गल इत्यनेन तया कृत कण्ठालिङ्गनं गम्यते । वक्त्रे कज्जलकालिमा इत्यनेन तेन कृतं तस्या नयन--चुम्बनं व्यज्यते । नयनयोस्ताम्बूलराग इत्यनेन तया कृतं तस्य नयनचुम्बनं गम्यते । अपरो राग इत्यनेन संभोगबाहुल्यं गम्यते । लीलाताम-रसोदरे श्वासाः समाप्तिं गता इत्यनेन सौरभाघ्राणं व्यपदिश्य कृतेन रोष-विकारश्वासगोपनेन नायिकाया धैर्यं[7] व्यज्यते । अत्रावहित्थं नाम संचारी भावः । नायिका स्वीया धीरा प्रगल्भा च । किं च खण्डिता । नायको धृष्टः । वैमनस्येर्ष्याकृतविप्रलम्भशृङ्गारः । यथोक्तं भारतीये – ' निद्रास्वेदा-लसगतिं सचिह्नं सरसव्रणम् । एवंविधं प्रियं दृष्ट्वा वैमनस्यं विधीयते ' इति । अत्र चेष्टाकृतसीर्ष्याकोपप्रायं नर्म । युक्तिरलंकारः ।

( १ ) $D_4$ वीटिकारक्तिमा ( २ ) $D_6$ संभोगरूपं ( ३ ) $D_6$ कोपातिशयजनिताः निश्वासाः ; $D_1$,$D_2$ दोषातिशयजनिताः श्वासोच्छ्वासाः ( ४ ) Mt विलासकमलगर्भे ; $D_3$ विलासकमले ( ५ ) This sentence is found only in $D_3$ ( ६ ) Mg रोषविकारश्वासकर्मगोपनेन ( ७ ) $D_1$,$D_2$,$D_3$ दैन्यं

मानं मुञ्चेति सख्या प्रार्थिता नायिका कोपातिशयेन तां प्रत्याह —

**अद्यारभ्य नहि प्रिये पुनरहं मानस्य वा भाजनं**
**गृह्णीयां विषरूपिणः शठमतेर्नामापि संक्षेपतः ।**
**किं तेनैव विना शशाङ्ककिरणस्पृष्टाट्टहासा निशा**
**नैको वा दिवसः पयोदमलिनो यायान्मम प्रावृषि ॥७२॥**

( a ) $D_7$ न च प्रिये ; $D_5$ यदि प्रिये ..मानस्य चान्यस्य वा ( b ) $D_5$ गृह्णीयां शठदुर्नयेन मनसा ( c ) $D_5$ ॰किरणस्याट्टाट्टहासा ; $D_4$ किरणस्पष्टा-ट्टहासा ; $D_6$ तत्तेनैव विना शशाङ्कधवलाः स्पृष्टा॰ ; T स्पष्टातिहासा ( d ) $D_2$ ॰ न ह्येको दिवसः ; $D_6$ वैको वा दिवसः ; $D_5$,Bm, एको वा दिवसः

From to-day onwards, I shall not give any place in my heart to anger against my lover; nor shall I ever mention the name of that poison-like evil-minded one. So will not the night, laughing loudly through the clear rays of the moon, pass without him, or will not a single day in the rainy season, darkened by clouds, pass without him? (72)

अद्यारभ्याद्यप्रभृति प्रिये वल्लभविषये अहं पुनः भूयो मानस्य कोपस्य भाजनमाश्रयो न हि भवामि। अथवा विषरूपिणो विषस्वरूपस्य शठमतेः कपटबुद्धेस्तस्य नामाभिधानं संक्षेपतोऽपि किञ्चिदपि न गृह्णीयां नोच्चारयेयम्। तेन विनैव स्थिताया मम प्रियतमेन विरहिताया एव मम शशाङ्ककिरण-स्पष्टाट्टहासा चन्द्रमरीचिव्यक्तातिहासा अतिप्रकाशेत्यर्थः। निशा रात्रिर्वा शरत्कालरात्रिरित्यर्थः। न यायात्किं प्राप्नुयात् किं पयोदमलिनो मेघश्यामः प्रावृषि वर्षाकाल एको दिवसो न यायात्किमिति संबन्धः। अत्रानर्थहेतुः शरत्कालरात्रिर्वा वर्षाकालदिवसो वा न यायात्किमित्यनेन नायिकाया वृथासाहसं प्रकटितमिति सूच्यते। नायिका स्वीया मध्या च। नायकः शठः। मान-कृतो विप्रलम्भशृङ्गारः। ईर्ष्याक्रोधप्रायं नर्म। जातिरलंकारः।

(१) $D_3$ संक्षेपतोऽपि न गृह्णीयां नो आख्येयम्। (२) $D_6$ किञ्चोच्चारयेयम्। (३) Mt चन्द्रमरीचिभासव्यक्तातिभासाः (४) $D_6$ अवधिसाहसं; $D_3$ यथार्थं साहसं; $D_4$ वृथायासं

नायिका नायकमुपालभते—

शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः।
तदेतत्क्वाचक्षे घृतमधुमयत्वद्बहुवचो—
विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥ ७३ ॥

(a) $D_2$ शठोऽन्यस्ताः (b) $D_1$, $D_3$, $D_8$ ०रभवत्

That thou, Oh false one, even while thou holdest me in an embrace, suddenly loosenest the knot of thy

arms, when thou heardst the clinking of the jewels of another's girdle—this to whom shall I report, when my friend, tipsy with the poison of thy butter-soaked and honey-sweet talk, does not at all attend to it? (73)

हे शठ धूर्त अन्यस्या इतरनायिकायाः काञ्चीमणिरणितं मेखलारत्नसिञ्जितमाकर्ण्य आश्लिष्यन्नेव आलिङ्गन्नेव सहसा शीघ्रं प्रशिथिलभुजग्रन्थिः विश्लथबाहुबन्धनः अभवः आसीरिति यत् तदेतत्साग्रं क्वाचक्षे कुत्र ब्रवीमि। यतो घृतमधुमयत्वद्बहुवचोविषेण घृतमधुमयं सर्पिःक्षौद्ररूपं त्वद्बहुवचस्तव भूरि वचनं घृतमधुमयं च त्वद्बहुवचश्च तदेव विषं तेनाघूर्णन्ती भ्राम्यन्ती मे सखी किमपि न गणयति न विचारयति न विश्वसितीत्यर्थः। वचनमिति शेषः। इति संबन्धः। अत्र नायकवचसां घृतमधुमयत्वकथनेन तदानीं हितत्वं पश्चादहितत्वं च गम्यते। यतो घृतमधुमिश्रिते विपाके विषत्वमापद्यते। यथोक्तं वाग्भटेन – 'मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः। एकत्र वा समांशानि विरुध्यन्ते परस्परम्॥ तदेतत्काचक्ष इत्यनेन सखी त्वया वञ्चिता कस्याग्रतो मम दुःखं कथयामीति स्वनिर्वेदः सूचितः। अत्र नायिका स्वीया प्रगल्भा च। नायकः शठः। विप्रलम्भशृङ्गारः। अत्र सोपालम्भवचनं नर्म। आक्षेपोऽलंकारः।

(१) $D_3$ मेखलाशिञ्जितं; Mt मेखलाकिङ्किणीसिञ्जितं (२) $D_1$, $D_2$, $D_5$ अभवत् (३) $D_1$, $D_2$, $D_5$ आसीदिति यत् शठस्यैतत् शाठ्यं क तदाचक्षे (४) Mg •त्कार्ये (५) Mg वाहटेन; Bm वाहटे; Mt वाग्देवेन (६) $D_1$,$D_2$ drop the sentences

कवेर्वाक्यम्—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै—
निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बालाभवच्चुम्बिता॥ ७४॥

(c) $D_1$, $D_2$,$D_6$ गण्डस्थलिं; Oa परिरभ्य जात० (d) $D_2$ हसिता; $D_6$ सहसा; $D_5$, S, T, U Bm, Mt बाला चिरं चुम्बिता

Finding herself alone ( with him ) in the bed-chamber, the young bride raised herself gently and slowly from her couch and for long scanned the face of her lord, who, the while, feigned deep sleep ; and then she imprinted a kiss on his face without any shyness; but as she perceived the thrill of pleasure on his cheeks, she bent down her head in bashfulness, while her laughing lord rained kisses on her. ( 74 )

शून्यं विविक्तं वासगृहं केलिभवनं विलोक्य निरीक्ष्य शयनाच्छय्यायाः किंचिदीषदुत्थाय उत्थिता भूत्वा शनैर्मन्दं निःशब्दामित्यर्थः । बाला निद्राव्याजमुपागतस्य स्वापच्छलं प्राप्तस्य पत्युः प्रियस्य मुखं सुचिरं निर्वर्ण्य दीर्घकालं विलोक्य सम्यक्परीक्ष्येत्यर्थः । विस्रब्धं निःशङ्कं यथा भवति तथा परिचुम्ब्य आस्वाद्य जातपुलकां उत्पन्नरोमाञ्चां तस्य गण्डस्थलीं विलोक्य लज्जानम्रमुखी व्रीडावनतवदना सती हसता प्रियेण चुम्बिताभवदिति संबन्धः। स्पष्ट एवाभिप्रायः । औत्सुक्य नाम संचारी भावः । नायिका स्वीया मुग्धा च । नायकोऽनुकूलः । संभोगशृङ्गारः । अत्र नर्मगर्भः । जातिरलंकारः ।

( १ ) Mt तल्पात् ( २ ) Mt कपटनिद्रां ( ३ ) $D_2$ हसिता ; $D_6$ सहसा ( ४ ) $D_4$, Mg मध्या च

कवेर्वाक्यम् —

पादासक्ते सुचिरमिह ते वामता नैव कान्ते
　मन्दारम्भे प्रणयिनि जने कोपने कोऽपराधः ।
इत्थं तस्याः परिजनगिरा कोपवेगे प्रशान्ते
　बाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रवृत्तम् ॥ ७५ ॥

( a ) $D_1$, $D_2$, $D_4$, $D_5$, Bm, O कैव ( b ) $D_5$ कोपराधोपरोधः
( c ) S, T, U, O, Oa तन्व्याः , $D_5$ परिजनकथाकोमले कोपयोगे

" Is this not frowardness from thy side against a lover who has been lying so long at thy feet ? Of what misdemeanour, Oh angry one, has the lover been guilty, he who is devoted to thee and who is slow to move ? " As

the vehemence of her anger abated on such words of her entourage, her welling tears could neither be held in check, nor could they start flowing further. (75)

हे कोपने कोपशीले सुचिरं दीर्घकालं पादासक्ते चरणलग्ने प्रणत इत्यर्थः। इहास्मिन्कान्ते प्रिये ते तव वामता वक्रता नैवं नास्त्येव । मन्दारम्भे शान्तोपक्रमे । अत्रारम्भो नाम मय्यपराधः कृत इति समर्थनोद्योगः । प्रणयिनि प्रेमवति जनेऽपराधः कः[3] । अयमपराधोऽपि अपराधत्वेन न गणनीय इत्यर्थ । इत्थं एवं परिजनगिरा सख्यादिवचनेन तस्या नायिकायाः कोपवेगे रोषोद्रेके प्रशान्ते क्षीणे सति तदनु तदनन्तरं सहसा शीघ्रं बाष्पोद्भेदैर्नयनजलोद्गमैर्न स्थितं नोषितं[4] न प्रवृत्तं नोद्गतमिति संबन्धः । बाष्पोद्भेदैर्न स्थितमित्यनेन परिजनानुनयात् कोपस्य वेगे शान्ते प्रसादोन्मुखत्वं सूचितम् । बाष्पोद्भेदस्य प्रसादसूचकत्वात् । न प्रवृत्तमित्यनेन प्रियापराधस्य प्रत्यक्षेण दृष्टत्वात् कोपस्तस्याः सहसा न शान्त इत्ययमर्थः सूचितः । अत्र नायिका स्वीया मध्याप्रगल्भयोरन्यतरा । नायकः शठः । विप्रलम्भशृङ्गारः । जातिरलंकारः ।

( १ ) $D_1$, $D_2$, $D_4$, $D_5$, Bm कैव ( २ ) Mt समर्थोऽभियोगः ; $D_2$ प्रणयिनि समर्थनोद्योगः ; $D_3$ समर्थयति ( ३ ) $D_6$ पतिजनेऽपराधः कः ; $D_6$, adds आगोऽपि ; Bm, Mg आगो नाम ( ४ ) $D_3$ नान्तर्हितं ( ५ ) $D_1$ न चलितं ; $D_4$, Mt न प्रस्थितम् ; $D_1$, $D_5$ न प्रवर्तितम्

कवेर्वाक्यम्—

कथमपि कृतप्रत्यापत्तौ प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम् ।
असहनसखीश्रोत्रप्राप्तिं विशङ्क्य ससंभ्रमं
विवलितदृशा शून्ये गेहे समुच्छ्वसितं पुनः ॥ ७६ ॥

( a ) $D_5$ कृतप्रत्याख्याने ; Mg, S कृतप्रत्यासत्तौ ; Mt,Oa कृतप्रत्यासत्तौ ( c ) $D_5$ असहनसखीश्रोत्रप्राप्तिप्रमादस० ( d ) $D_5$ विगलितदृशा ; $D_2$ शून्यागारे

When the lover was somehow persuaded to come back he was confused in his answers; but she, who had wasted away in separation, feigned as if she had not heard him ; fearing, however, that his words might have reached the ears of her intolerant friends, she hurriedly allowed her restless eyes to look around, and then finding that the apartment was empty , she again heaved sighs of relief ! (76)

कथमपि कथंचित् कृतप्रत्यापत्तौ कृता प्रत्यापत्तिर्यस्य तथोक्तः, तस्मिन् । अत्र कोपान्निष्कासितस्य पुनःप्राप्तिः प्रत्यापत्तिः । प्रिये दयिते स्खलितोत्तरे स्खलितं विपर्यस्तमुत्तरं प्रतिवाक्यं यस्य स तथोक्तः तस्मिन् । कृतगोत्रस्खलन इत्यर्थः । विरहकृशया वियोगक्षामया नायिकया व्याजं मिषं कृत्वा विधाय किमपि व्याजीकृत्य इत्यर्थः । अश्रुतमश्रवणं प्रकल्पितं कृतमश्रवणमभिनीतमित्यर्थः । पुनरसहनसखीश्रोत्रप्राप्तिं असहना असहिष्णवस्ता एव सख्यस्तासां श्रोत्रं श्रवणं तस्य प्राप्तिस्तां विशङ्क्य शङ्कित्वा ससंभ्रमं सत्वरं यथा भवति तथा विवलितदृशा पार्श्वव्यापारितदृष्ट्या तथा गेहे शून्ये विविक्ते सति निर्गतसखीजन इत्यर्थः । भूयः पुनः समुच्छ्वसितमुच्छ्वासः कृतः संतुष्टमित्यर्थः । इति संबन्धः । विरहकृशया व्याजं कृत्वा अश्रुतं प्रकल्पितमित्यनेन पुनर्विरहभीरुत्वं सूचितम् । सखीनामसहमानत्वकथनेन नायकापराधे नायिकया सोढेऽपि तासां तत्परिभवासहत्वेन तस्यां सौहार्दातिशयः सूचितः । शङ्का नाम संचारिभावः । नायिका स्वीया मध्या च । नायको धृष्टः । मानानन्तरं संभोगशृङ्गारः । अत्र नर्मगर्भः । जातिरलंकारः ।

( १ ) Mt कृता प्रत्यासक्तिः पुनरागमनं येन स तथोक्तः । ( २ ) $D_3$ तत्र निष्कासितस्य पुनरावर्तनं प्रत्यापत्तिः । ( ३ ) Mg प्रत्यासत्तिः ; Mt प्रत्यासक्तिः ( ४ ) $D_2$ अयोगक्षामया ; $D_1$,$D_5$ अयोगक्षामायाः नायिकायाः ( ५ ) $D_3$ परिवर्तितदृष्ट्या । विगलितदृशा इति पाठे साश्रुदृष्ट्येत्यर्थः ।

नायिका सखीमाह—

पश्याश्लेषविशीर्णचन्दनरजःपुञ्जप्रकर्षादियं
शय्या सम्प्रति कोमलाङ्गि परुषेत्यारोप्य मां वक्षसि ।

गाढौष्ठग्रहपीडनाकुलतया पादाग्रसंदंशके—
नाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ॥७७॥

( a ) Oa, S, Mt प्रत्याश्लेषविकीर्ण०

" Mark, Oh thou so delicate of limb, this bed is now hard on account of the accumulation of heaps of sandal-dust fallen in deep embraces ; " so saying he put me on his breast, and urged by passionate desire as he firmly bit my lip, he pulled away my garment with the toes of his feet as with a pair of tongs and started doing what for that rogue was the proper thing to do ! (77)

हे कोमलाङ्गि आश्लेषविशीर्णचन्दनरजःपुञ्जप्रकर्षात् आश्लेषेणालिङ्गनेन विशीर्णे च्युतं तदेव चन्दनरजस्तस्य पुञ्जः समूहः तस्य प्रकर्षोऽतिशयस्त-स्मादियं शय्या तल्पं संप्रति परुषा कर्कशा पश्येत्युक्त्वा मां वक्षस्यारोप्यारोह्य गाढौष्ठग्रहपीडनाकुलतया ओष्ठस्याधरस्य ग्रहो ग्रहणं दंशनमित्यर्थः । गाढो दृढः स चासावोष्ठग्रहश्च तेन पीडनं व्यथा तेनाकुला तस्या भाव आकुलता तया हेतुना पादाग्रसंदंशकेन । संदंशको नाम ग्रहणसाधनयन्त्रविशेषः । पादाग्रमेव संदंशकः पादाग्रसंदंशकस्तेन पादाग्रसंदंशकेनाम्बरमंशुकं मदीयमिति शेषः । आकृष्यापसार्य धूर्तेन कितवेनात्मनः स्वस्य यदुचितं यत्कर्मोचितं तत्प्रस्तुतमाचारितमिति संबन्धः । नायिका स्वीया मध्या च नायकोऽनुकूलः । संभोगशृङ्गारः । नर्मगर्भः । युक्तिरलंकारः ।

( १ ) Mt ०विकीर्ण० ( २ ) Mt प्रत्याश्लेषेण ( ३ ) Mt विकीर्णे ( ४ ) Mg adds इदानीं ( ५ ) $D_3$ drops the sentence संदंशको नाम upto ०नाम्बरं ( ६ ) $D_1$ प्रसार्य ; $D_3$ आक्षिप्य.

दूती नायकमुपालभते—

अच्छिन्नं नयनाम्बु बन्धुषु कृतं चिन्ता गुरुष्वर्पिता
दत्तं दैन्यमशेषतः परिजने तापः सखीष्वाहितः ।
अद्य श्वः परनिर्वृतिं भजति सा श्वासैः परं खिद्यते
विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ॥ ७८ ॥

(b) $D_3$,$D_5$ दैन्यं दत्तमशेषतः ; O परजने (c) O परिनिर्वृतिं ; S भजसि स ; $D_6$ भिद्यते (d) O, S, T विभक्तं त्वया

Tears uninterruptedly flowing, she has given to her kith and kin ; anxious thoughts she has passed on to her elders ; on all her attendants she has bestowed her distress, and has put fever into the hearts of her friends ; to-day or on the morrow, she will enjoy the highest bliss ; her sighs afflict her severely. So be at ease ; for has she not distributed the grief that was caused by separation ? (78)

अच्छिन्नं संततं नयनाम्बु अश्रु बन्धुषु स्वजनेषु कृतमर्पितम् । चिन्ता विचारो गुरुषु जनन्यादिष्वर्पिता न्यस्ता । दैन्यं दीनत्वमशेषतः परिजने सर्वस्मिन् परिचारकवर्गे । सप्तम्यर्थे तसिः । दत्तं निहितम् । तापः संज्वरः सखीषु वयस्यास्वाहितो निक्षिप्तः । एवमनेन प्रकारेण तया विप्रयोगजनितं विरहोत्पादितं दुःखं विभक्तं विभागं प्रापितम् । सा यतः श्वासैः श्वसितैः परमत्यर्थं खिद्यते खिन्ना भवति । तस्मादद्यास्मिन् दिवसे श्वः परस्मिन् दिवसे वा परनिर्वृतिमत्यन्तसौख्यं भजति प्राप्नोति । अतः विस्रब्धो निश्चिन्तो भवेति संबन्धः । परनिर्वृतिं भजतीत्यनेन मरणं सूच्यते । विस्रब्धो भवेत्यनेनोपालम्भो गम्यते । अत्र मूर्च्छा नाम दशाविशेषः । नायिका परकीया कन्या च । अयोगविप्रलम्भशृङ्गारः । अत्र सोपालम्भवचनं नर्म । आक्षेपोऽलंकारः ।

(१) Mg परिकरवर्गे ; Bm परिचारवंशे ; Mt परिचारकजने (२) $D_1$,$D_2$ न्यस्तं निहितमित्यर्थः । ; $D_3$ विभागीकृतं (३) $D_6$ भिद्यते भिन्ना भवति (४) $D_1$, $D_6$, Mg निश्चितो (५) Mg अवगम्यते (६) $D_3$ drops कन्या च (७) $D_4$,$D_6$ सोपालम्भवचननर्म

कवेर्वाक्यम् — नायिका सखीमाह—

स्फुटतु हृदयं कामः कामं करोतु कृशां तनुं
न सखि चटुलप्रेम्णा कार्यं पुनर्दयितेन मे ।
इति सरभसं मानाटोपादुदीर्य वचस्तया
रमणपदवी सारङ्गाक्ष्या सशङ्कितमीक्षिता ॥ ७९ ॥

( a ) T, S कामं तनोतु ; $D_1$,$D_6$,Bm,T तनुं तनुं ( b ) $D_6$ न खलु ( c ) $D_2$ मानावेशात् ; $D_5$ मानक्षेपात् ; Oa. S, Mt कोपाटोपात् ( d ) $D_5$ निरन्तरमो०

" Let the heart burst ; let the God of love make my body emaciated according to his pleasure ; I have, Oh friend, nothing more to do with the lover whose love is so unsteady ; " the gazelle-eyed one, in the height of her resentment, uttered these words, but with fear in her heart, looked at the path by which he was wont to come. (79)

हे सखि हृदयं हृत् स्फुटतु दलतु । कामो मन्मथः कामं प्रकामं तनुं शरीरं तनुं कृशां करोतु । मे मम पुनश्चटुलप्रेम्णा चञ्चलप्रणयेन दयितेन प्रियेण कार्यं न प्रयोजनं नास्ति । इत्यनेन प्रकारेण मानाटोपात् कोपातिशयात् सरभसं सत्वरं यथा भवति तथा वच उदीर्योक्त्वा तया सारङ्गाक्ष्या हरिणलोचनया सशङ्कितं सचकितं रमणपदवी प्रियतमवर्त्म ईक्षिता दृष्टेति संबन्धः । स्पष्ट एवाभिप्रायः । अत्र चकितं नाम संचारिभावः । चकितं भयसंभ्रम इत्युक्तत्वात् । नायिका स्वीया मध्या च । किं च कलहान्तरिता । नायकः शठः । मानकृतो विप्रलम्भशृङ्गारः । अत्र सभयं शृङ्गारि नर्म । जातिरलंकारः ।

( १ ) $D_3$ कर्तव्यमेव नास्ति । ( २ ) $D_3$ मानावेशात् ( ३ ) $D_4$ प्रियतममार्गः ( ४ ) $D_3$ drops the sentence ( ५ ) $D_5$ औत्सुक्यं नाम संचारि भावः ( ६ ) भयसाध्वसं ; भयसंभ्रान्तं ( ७ ) $D_3$ ईर्ष्याक्रोधप्रायं नर्म

कवेर्वाक्यम्—

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
प्रेयान्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
कान्ता कुड्मलितानेन्दु ददती वायुं स्थिता तत्र सा
भ्रान्त्या धूर्ततया तदा नतिमृते तेनाभवच्चुम्बिता ॥८०॥

( १ ) Mt बहुवचननिर्देशात् एवं निर्वेदादिषु कविभिर्बहुवचनं प्रयुज्यते । ( २ ) $D_6$ adds after this यद्वा अत्र त्वं प्रेयान् इति एकवचनेन एकरूपप्रेमपात्रत्वं व्यज्यते । प्रियतमा इत्यादिबहुवचनेन एकरूपतद्व्यतिरेक इति बोध्यम् । ( ३ ) $D_4$ प्रेमहानिसहिष्णुत्वं ( ४ ) $D_1$ श्लेषस्य; $D_2$ श्लेषेण ( ५ ) $D_3$ किमपि अनिर्वाच्यरसान्तरमित्यध्याहार्यम्

कवेर्वाक्यम् —

**मुग्धे मुग्धतयैव नेतुमखिलं कालं किमारभ्यते**
**मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।**
**सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना**
**नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥ ८२ ॥**

( a ) $D_5$ ०मखिलः कालः ( b ) $D_5$ दूरीकुरु ( d ) $D_5$ ननु स मे; O हि सखि मे

" Oh you innocent child ! Why do you think of passing all your time in simple faith ? Show proper pride, take courage, and give up your frank and open behaviour towards your lover. " Thus admonished by her friend, her countenance betraying fear ( in her heart ), she made reply : " Speak softly ; for my beloved dwells in my heart and ( perchance ) he would hear you. " (82)

हे मुग्धे बाले मुग्धतयैव मूढतयैव अखिलं समस्तं कालं अनेहसं[1] नेतुमतिवाहयितुं किमारभ्यते किमर्थमुद्योगः क्रियते । अन्यथा किं कर्तव्यमिति पृच्छसि चेद् ब्रवीमि । प्रेयसि प्रियतमे मानं कोपं धत्स्व धारय । धृतिं धैर्यं बधान नह्यस्वावलम्बस्वेत्यर्थः । ऋजुतामार्जवं दूरे विप्रकृष्टे कुरु विधेहि वक्रतां भजस्वेत्यर्थः । सा एवमनेनैव प्रकारेण सख्या वयस्यया प्रतिबोधिता उपदिष्टा भूत्वा भीतानना त्रस्तमुखी सती तां सखीं प्रतिवचः उत्तरमाह ब्रवीति स्म[2] । किमिति । हे सखि नीचैरल्पध्वनि यथा भवति तथा शंस कथय हि यस्मात्कारणात् मे मम हृदि हृदये स्थितः प्राणेश्वरः श्रोष्यति

आकर्णयिष्यति इति संबन्धः । स्पष्ट एवाभिप्रायः । अत्र भयं नाम संचारी भावः । स्थायीभावानामपि क्वचित् संचारित्वकथनात् । नायिका स्वीया मुग्धा । नायकः शठः । अत्र समयं शृङ्गारि नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_3$,$D_4$ drop अनेहसं ( २ ) $D_6$ adds नीचैःशंसेत्युच्चारानुपपत्तेरथवा प्रतिवच इत्यस्य वचः प्रतीति प्रतिवच इत्यर्थः । अन्यथा किमिति ननु सखि etc. ( ३ ) $D_6$ adds मन्दं; $D_1$,$D_2$, have अल्पं ( ४ ) $D_3$ drops the sentence ( ५ ) $D_1$,$D_2$ drop समयं

प्रोषितो नायको वसन्तसमयागमे प्रियाया अवस्थान्तरं वितर्कयन्नाह —

आलम्ब्याङ्गणवापिकापरिसरे चूतद्रुमे मञ्जरीं
सर्पत्सान्द्रपरागलम्पटरणद्भृङ्गाङ्गनाशोभिनीम् ।
मन्ये त्वां तनुमुत्तरीयशकलेनाच्छाद्य बाला स्फुरत्-
कण्ठध्वानानिरोधकम्पितकुचश्वासोद्गमा रोदिति ॥८३॥

(a) O °ङ्गणदीर्घिकाप°; T °ङ्गणवाटिकाप°; $D_2$ मञ्जरी; (b) $D_2$ °शोभिनी; $D_2$ °रटत्°

Holding the blossoms of the mango-tree which grows in the ground near the well in the courtyard, those blossoms which the female bees adorn as they hum around, greedy of the pervading sweetness of the thick pollen, the young girl, meseems, having covered her body by a portion of her upper garment, is weeping, while her sighs make her bosom heave, as the sound of weeping, as it rises, is stifled in her throat. (83)

अङ्गणवापिकापरिसरे अङ्गणे चत्वरे वापिका दीर्घिका तस्याः परिसरे चूतद्रुमे आम्रवृक्षे सर्पन् विसरन् सान्द्रो निबिडः परागः पुष्परेणुस्तस्मिन् लम्पटा आसक्ता रणन्त्यो ध्वनन्त्यो भृङ्गाङ्गना भ्रमर्यस्ताभिः शोभितमिति भृङ्गाङ्गनाशोभिनीं तां मञ्जरीमालम्ब्य गृहीत्वा बाला त्वां स्वीयां तनुमुत्तरीय-

शकलेन संव्यानाञ्चलेनाच्छाद्य अवगुण्ठ्य स्फुरत्कण्ठध्वाननिरोधकम्पित-कुचस्वासोद्गमा सती स्फुरन् प्रादुर्भवन् कण्ठध्वानः कण्ठध्वनिस्तस्य निरोधो निवारणं तेन कम्पितौ कुचौ श्वासोद्गमश्च यस्याः सा तथोक्ता रोदिति रोदनं करोतीति मन्ये स्मरामीति संबन्धः। दैन्यं नाम संचारी भावः। नायिका स्वीया मुग्धा च। किं च प्रोषितभर्तृका। नायकोऽनुकूलः। प्रवासविप्रलम्भशृङ्गारः। जातिरलंकारः।

(१) $D_4$ प्रोषितनायकतत्समागमे प्रियाया अवस्थान्तरं कविराह। (२) $D_3$,Bm प्राङ्गणदीपिकाप्रान्ते चूतद्रुमे मञ्जरीं मालां (Bm वल्लरीं) गृहीत्वा। कीदृशीं सर्पत्सान्द्रपरागलंपटरणद्भृङ्गाङ्गनाशोभिनीं अतिसान्द्रपरागपतनकूजद्भृङ्गाङ्गनाशोभिनीं। (३) $D_1$ सव्याञ्चलेन; $D_2$ सव्येनाञ्चलेन; $D_4$ drops the explanation; $D_3$ explains चेलाञ्चलेन (४) $D_2$ मध्या

अपराधिना नायकेन भेदं प्रापितां सखी नायिकामुपालभते—

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद-
स्त्वयाकाण्डे मानः किमिति तरले संप्रति कृतः।
समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः॥ ८४॥

Why hast thou, Oh restless one, suddenly manifested such jealous resentment (against the loved one) without minding whither this would lead thy love and without any regard for thy friends? Thou hast really, with thy own hands, drawn upon thyself these embers whose flames rise up blazing like that of the fire that consumes the world; therefore, stop this thy weeping which avails no more than cries in the wilderness. (84)

प्रेम्णः अनुरागस्य तदीयस्येति शेषः। परिणतिं परिपाकमनालोच्याविचार्य सुहृदः सखीरनादृत्यावधीर्य तासां वचनमुल्लङ्घ्येत्यर्थः। हे तरले चपले

आकर्णयिष्यति इति संबन्धः । स्पष्ट एवाभिप्रायः । अत्र भयं नाम संचारी भावः । स्थायीभावानामपि क्वचित् संचारित्वकथनात् । नायिका स्वीया मुग्धा । नायकः शठः । अत्र सभयं शृङ्गारि नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_3$,$D_4$ drop अनेहसं ( २ ) $D_6$ adds नीचैःशंसेत्युत्त-रानुपपत्तेरथवा प्रतिवच इत्यस्य वचः प्रतीति प्रतिवच इत्यर्थः । अन्यथा किमिति ननु सखि etc. ( ३ ) $D_6$ adds मन्दं ; $D_1$,$D_2$, have अल्पं ( ४ ) $D_3$ drops the sentence ( ५ ) $D_1$,$D_2$ drop सभयं

प्रोषितो नायको वसन्तसमयागमे प्रियाया अवस्थान्तरं वितर्कयन्नाह —

**आलम्ब्याङ्गणवापिकापरिसरे चूतद्रुमे मञ्जरीं**
**सर्पत्सान्द्रपरागलम्पटरणद्भृङ्गाङ्गनाशोभिनीम् ।**
**मन्ये स्वां तनुमुत्तरीयशकलेनाच्छाद्य बाला स्फुरत्-**
**कण्ठध्वानानिरोधकम्पितकुचश्वासोद्गमा रोदिति ॥८३॥**

(a) O ०ङ्गणदीर्घिकाप० ; T ०ङ्गणवाटिकाप० ; $D_2$ मञ्जरी ; (b) $D_2$ ०शोभिनी ; $D_5$ ०रटत्०

Holding the blossoms of the mango-tree which grows in the ground near the well in the courtyard, those blossoms which the female bees adorn as they hum around, greedy of the pervading sweetness of the thick pollen, the young girl, meseems, having covered her body by a portion of her upper garment, is weeping, while her sighs make her bosom heave, as the sound of weeping, as it rises, is stifled in her throat. (83)

अङ्गणवापिकापरिसरे अङ्गणे चत्वरे वापिका दीर्घिका तस्याः परिसरे चूतद्रुमे आम्रवृक्षे सर्पन् विसरन् सान्द्रो निबिडः परागः पुष्परेणुस्तस्मिन् लम्पटा आसक्ता रणन्त्यो ध्वनन्त्यो भृङ्गाङ्गना भ्रमर्यस्ताभिः शोभितमिति भृङ्गाङ्गनाशोभिनीं तां मञ्जरीमालम्ब्य गृहीत्वा बाला स्वां स्वीयां तनुमुत्तरीय-

शकलेन संव्यानाञ्चलेनाच्छाद्य अवगुण्ठ्य स्फुरत्कण्ठध्वाननिरोधकम्पित-कुचस्वासोद्गमा सती स्फुरन् प्रादुर्भवन् कण्ठध्वानः कण्ठध्वनिस्तस्य निरोधो निवारणं तेन कम्पितौ कुचौ श्वासोद्गमश्च यस्याः सा तथोक्ता रोदिति रोदनं करोतीति मन्ये स्मरामीति संबन्धः। दैन्यं नाम संचारी भावः। नायिका स्वीया मुग्धा च। किं च प्रोषितभर्तृका। नायकोऽनुकूलः। प्रवासविप्रलम्भशृङ्गारः। जातिरलंकारः।

( १ ) $D_4$ प्रोषितनायकतत्समागमे प्रियाया अवस्थान्तरं कविराह। ( २ ) $D_3$,Bm प्राङ्गणदीपिकाप्रान्ते चूतद्रुमे मञ्जरीं मालां ( Bm वल्लरीं ) गृहीत्वा। कीदृशीं सर्पत्सान्द्रपरागलंपटरणद्भृङ्गाङ्गनाशोभिनीं अति-सान्द्रपरागपतनकूजद्भृङ्गाङ्गनाशोभिनीं। ( ३ ) $D_1$ सव्याञ्चलेन; $D_2$ सव्येनाञ्चलेन; $D_4$ drops the explanation; $D_3$ explains चेलाञ्चलेन ( ४ ) $D_2$ मध्या

अपराधिना नायकेन भेदं प्रापितां सखी नायिकामुपालभते—

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद-
स्त्वयाकाण्डे मानः किमिति तरले संप्रति कृतः।
समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः॥ ८४॥

Why hast thou, Oh restless one, suddenly manifested such jealous resentment ( against the loved one ) without minding whither this would lead thy love and without any regard for thy friends? Thou hast really, with thy own hands, drawn upon thyself these embers whose flames rise up blazing like that of the fire that consumes the world; therefore, stop this thy weeping which avails no more than cries in the wilderness. (84)

प्रेम्णः अनुरागस्य तदीयस्येति शेषः। परिणतिं परिपाकमनालोच्यावि-चार्य सुहृदः सखीरनादृत्यावधीर्य तासां वचनमुल्लङ्घ्येत्यर्थः। हे तरले चपले

त्वया संप्रति इदानीमकाण्डेऽनवसरे किमिति किमर्थं मानः कोप कृतः विरचितः प्रियं प्रतीति शेषः । हि· यस्मात्कारणात् प्रलयदहनोद्भासुरशिखाः प्रलयः कल्पान्तस्तस्मिन् दहनो वह्निस्तस्येवोद्भासुराः प्रदीप्ताः शिखाः ज्वाला येषां ते तथोक्ताः । अङ्गारा उल्मुकाः एते इमे स्वहस्तेनात्मकरेण समाकृष्टाः समाक्षिप्ताः स्वस्योपरि अवकीर्णा इत्यर्थः । तत्तस्मात्कारणात् अधुना संप्रति अरण्यरुदितैर्व्यर्थरोदनैरलं पर्याप्तमिति संबन्धः । अत्र स्वहस्तेनाङ्गाराः समाकृष्टा इत्यनेन भवत्या ज्ञात्वैवानर्थः कृत इति सूचितम् । अरण्यरुदितैरलमित्यनेन प्रियस्यासंनिधौ रुदित्वा किं फलं लभ्यत इत्ययमर्थोऽवगम्यते । दैन्यं नाम संचारी भावः । नायिका स्वीया मध्या च । किं च कलहान्तरिता । नायकः शठः । मानकृतो विप्रलम्भशृङ्गारः । सोपालम्भवचनं नर्म । आक्षेपोऽलंकारः ।

(१) Mg गमिता (२) $D_1$,$D_2$,$D_3$ drop उल्मुका ; $D_4$ उल्कानि ; Mg,Bm उल्मुकानि ; Mt उल्काः (३) $D_1$, $D_2$, $D_3$ वयस्यासंनिधौ

नायको नायिकामुपालभते —

कपोले पत्त्राली करतलनिरोधेन मृदिता
  निपीतो निश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं
  प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥ ८५ ॥

(c) $D_1$, $D_2$, $D_3$, $D_4$, $D_5$, O स्तनतटीं

The pressure of the palm of thy hand, that covers the cheek, has wiped the ornamental paintings off it ; thy sighs have lapped up the nectar-sweet moisture of thy lips ; the tears which continually choke thy throat. Cause the bosom to heave : thus, Oh inexorable one, thy anger has become thy beloved, but not I ! (85)

कपोले गण्डस्थले पत्त्राली पत्त्ररचना करतलनिरोधेन पाणितलनिपीडनेन मृदिता मृष्टा । निःश्वासैरमृतहृद्योऽमृतवन्मधुरोऽयमधररसो निपीतं आस्वा-

दितः । बाष्पः अश्रु कण्ठे लग्नः सक्तः सन् स्तनतटं स्तनप्रान्तं मुहुः पुनः पुनः तरलयति कम्पयति । एवमनेन प्रकारेण मन्युः कोपस्तव प्रियो हितो जातः । हे निरनुरोधे अनङ्गीकृतानुवर्तने वयं तु प्रियौ हिता न भवाम इति संबन्धः । अत्र पत्रालीमर्दनादिव्यापारेण सौभाग्यहारी मन्युः तव हितो जात इत्यनेन च त्वदनुवर्तनकारिणो वयं तु तव हिता न भवाम इत्यनेन चोपालम्भो गम्यते । नायिका स्वीया मध्या च । नायकः शठः । मानेकृतो विप्रलम्भशृङ्गारः । अत्र सोपालम्भवचनं नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_4$ निपीतोऽभूत् ; $D_1$,$D_2$,$D_5$ निपीतो अपहृतः । ( २ ) $D_1$, $D_2$, $D_3$, $D_4$, $D_5$ स्तनतटीं ; $D_6$,Mg स्तनतटं कुचप्रान्तं ( ३ ) $D_6$ तव हिता ( ४ ) $D_2$, $D_5$ ईर्ष्यामान॰

कवेर्वाक्यम् —

**आयाते दयिते मनोरथशतैर्नीत्वा कथंचिद्दिनं**
**गत्वा वासगृहं जडे परिजने दीर्घां कथां कुर्वति ॥**
**दष्टास्मीत्यभिधाय सत्वरपदं व्याधूय चीनांशुकं**
**तन्वङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः शमम् ॥८६॥**

( a ) ॰शतैः धृत्वा ( b ) $D_6$,Bm वासगृहे ( c ) $D_3$ दष्टास्मी॰ T व्याधूय चीरांशुकं ; S व्याधूय चीनाम्बरं

When the lover had returned, she passed the day with difficulty filling her mind with hundreds of daydreams; and then entering the pleasure-house, she saw that her obtuse attendants lacking all sagacity carried on a long conversation ; the slender-bodied one, whose heart grew impatient for enjoyment of love cried out, "O, something has bitten me !" and hurriedly tossing her silken scarf she extinguished the lamp. (8-)

दयिते प्रिये आयाते आगते सति देशान्तरादिति शेषः । मनोरथशतैः मनोरथानां संकल्पानां शतानि बहूनि तैरनेकविधाभिलाषैर्दिनं दिवसं कथं-

न्वित् कृच्छ्रेण नीत्वातिवाह्य वासगृहं केलिभवनं गत्वा प्राप्य जडे विवेकशून्ये परिजने परिचारकवर्गे दीर्घामायतां कथां वाक्यप्रबन्धं कुर्वति सति विदधति सति रतिकातरेण रतौ रतिविषये कातरमधीरं तेन कालविलम्बाऽसहिष्णुनेत्यर्थः । मनसा हृदयेनोपलक्षितया तन्वङ्गया कान्तया दष्टा क्षतास्मीति येन केनापि जन्तुनेति शेषः । सत्वरपदं ससंभ्रमवचनं यथा भवति तथाभिधाय व्याहृत्य चीनांशुकं क्षौमवसनं व्याधूय विक्षिप्य प्रदीपो दीपः शमं शान्तिं नीतः प्रापित इति संबन्धः । अभिप्रायो व्यक्त एव । अत्रौत्सुक्यं नाम संचारी भावः । नायिका स्वीया प्रगल्भा च । नायकोऽनुकूलः । प्रवासानन्तरं संभोगशृङ्गारः । अत्र नर्मगर्भः । युक्तिरलंकारः ।

( १ ) $D_6$ ॰विधालापै ; $D_3$ has simply मनोरथशतैरनेकविधाभिलाषैः ; $D_1$, $D_2$ drop अनेकविधाभिलाषैः ( २ ) Mt संवीज्य ( ३ ) $D_2$ drops प्रवासानन्तरं

पूर्वं कृतपरिचयातिशयेन नायकेन पश्चात्परित्यक्ता नायिका स्ववाटिकायां यदृच्छागतं प्रियं[3] दृष्ट्वा तमुपालभते—

रोहन्तौ प्रथमं ममोरसि तव प्राप्तौ विवृद्धिं स्तनौ
संल्लापास्तव वाक्यभङ्गिमिलनान्मौग्ध्यं परं त्याजिताः ।
धात्रीकण्ठमपास्य बाहुलतिके कण्ठे तवासञ्जिते
निर्दाक्षिण्य करोमि किन्नु विशिखाप्येषा न पन्थास्तव ॥८७॥

( b ) $D_3$ ॰भङ्ग॰ ( c ) $D_4$, O, Ṭ, U, Oa, S आसाञ्जिते

The twin breasts, first budding on my bosom, grew plump by contact with your bosom; my conversation, mixing with your clever turns of speech, lost to a very great extent its original simplicity; my creeper-like arms, leaving the neck of my foster-mother, clung around your neck: what can I do, Oh discourteous one, even this street is no longer your trodden path! (87)

प्रथमं ममोरसि रोहन्तौ उद्भवन्तौ स्तनौ तवोरसि विवृद्धिं प्राप्तौ गतौ । मम संल्लापाः संभाषणानि तव वाक्यभङ्गिमिलनाद् वाक्यरीतिमिश्रणात्

परमत्यर्थं मौग्ध्यं मूढतां त्याजिता मोचिताः । मम बाहुलतिके धात्रीकण्ठ-मुपमातृकण्ठमपास्य विहाय तव कण्ठे आसञ्जिते आसङ्गं प्रापिते । हे निर्दाक्षिण्य दाक्षिण्यरहित । दाक्षिण्यं नाम परचेतोऽनुवर्तनम् । एषा विशि-खापि इयं रथ्यापि तव पन्था मार्गो न भवति । एवं सति किं नु करोमि किं कर्तव्यम् । नु पृच्छायाम् । भवन्तं किमुपालभ इत्यर्थः । अत्र नायिका साधारणा । सोपालम्भवचनं नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_1$, $D_2$, Bm कृतपरिचया ; $D_3$, Mg कृतपरिचयातिशया ( २ ) $D_1$, $D_2$, $D_5$ स्वगेहे ( ३ ) $D_4$, Bm, Mg नायकं ; $D_1$, $D_2$ drop the word ( ४ ) $D_3$ वाक्यभणितिमिश्रणात् ( ५ ) $D_4$, Bm आसज्जिते ; $D_1$ आसंदिते ( ६ ) $D_1$, $D_2$, Mt परचित्ता॰ ( ७ ) $D_4$ adds विकल्पे चेत्यमरः ।

नायकोऽनुभूतार्थस्मरणाज्जातकुतूहलः सन् सहचरमाह–

**चक्षुःप्रीत्या निषण्णे मनसि परिचयाच्चिन्त्यमानेऽभ्युपाये**
**याते रागे विवृद्धिं प्रविसरति गिरां विस्तरे दूतिकायाः ।**
**आस्तां दूरे स तावत्सरभसदयितालिङ्गनानन्दलाभ-**
**स्तद्गेहोपान्तरथ्याभ्रमणमपि परां निर्वृतिं संतनोति ॥ ८८ ॥**

(b) T रागे याते वि॰ (c) Oa, S प्रसरति च गिरां (d) T निवृतिं

When the mind felt attached through love at ( first ) sight, when constant thought led to the finding out of means, when passion grew intense, and negotiations through a messenger were zealously promoted, let alone the joy that comes through the impetuous embraces of the beloved's body—even the wanderings along the street skirting her house give the highest bliss ! (88)

चक्षुःप्रीत्या नयनप्रीत्या मनसि चित्ते निषण्णे सति निविष्टे सति आसक्ते सतीत्यर्थः । यतः परिचयादभ्यासान्मुहुर्मुहुः स्मरणादित्यर्थः । अभ्युपाये प्राप्त्यु-

पाये चिन्त्यमाने सति विचार्यमाणे सतीत्यर्थः । ततो रागे प्रेम्णि विवृद्धिमतिशयं याते प्राप्ते सति । ततो दूतिकायाः संचारिकाया गिरां वाचां विस्तरे प्रपञ्चे प्रविसरति सति व्याप्रियमाणे सति यः सरभसदयितालिङ्गनानन्दलाभः सत्वरप्रियापरिरम्भाह्लादप्राप्तिर्भवति स तावद्दूरे आस्तां तिष्ठतु । अस्य महिमा वर्णयितुमशक्य इत्यर्थः । किं तु तद्गेहोपान्तरथ्याभ्रमणमपि नायिकाया गृहसमीपवीथिपर्यटनमपि परां निर्वृतिं अत्यन्तमानन्दं संतनोति विदधातीति संबन्धः । अत्र स्मृतिर्नाम संचारी भावः । नायिका परकीया । आत्मोपक्षेपरूपं शृङ्गारि नर्म । अतिशयोक्तिरलंकारः ।

( १ ) $D_4$,Bm,Mt अनुभूतस्मरणात् ( २ ) $D_1$,$D_2$,$D_5$ स्वयमाह ( ३ ) $D_4$ गते ; $D_2$.$D_3$ drop प्राप्ते ( ४ ) $D_4$ परिरम्भणाह्लाद० ( ५ ) $D_4$ drops the sentence ( ६ ) $D_3$ drops the sentence

कवेर्वाक्यम्—

करकिसलयं धूत्वा धूत्वा विलम्बितमेखला
क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति ।
स्थगयति मुहुः पत्युर्नेत्रे विहस्य समाकुला
सुरतविरतौ रम्यं तन्वी पुनःपुनरीक्ष्यते ॥ ८९ ॥

( a ) $D_5$ धुत्वा धुत्वा विसर्जति वाससी ( d ) $D_3$,$D_5$,Mg पुनरीक्षते

Tossing about her sprout-like arms now and again, with the girdle slipping down, she dashes on to the lamp-flame what remained of her flower-garland ; smiling and bewildered she closes the eyes of her husband again and again; at the end of their love-dalliance the girl is looked at ( by her husband ) repeatedly. (89)

सुरतविरतौ संभोगान्ते विलम्बितमेखला विलम्नरशना पादयोरिति शेषः । तन्वी कान्ता समाकुला संभ्रान्ता सती दीपनिर्वापणार्थे करकिसलयं पाणिपल्लवं धूत्वा धूत्वा व्याधूय व्याधूय विफलप्रयत्ना सती प्रदीपशिखां प्रति प्रदीप-

ज्वालामुद्दिश्य सुमनोमालाशेषं पुष्पदामच्छेदं संभोगपरिमर्दविच्छिन्नशिष्टांशमित्यर्थः। क्षिपति प्रेरयति। विहस्य स्मितं कृत्वा मुहुः पुनः पुनः पत्युर्नेत्रे स्थगयति आच्छादयति। रम्यं मनोहरं यथा भवति तथा पुनःपुनरीक्ष्यते विलोक्यते प्रियेणेति शेषः इति संबन्धः। विलम्बितमेखलेत्यनेन पुरुषायितसंभोगान्ते मेखलासंदानितचरणत्वादपसर्तुमशक्यमिति सूच्यते। प्रदीपशिखां प्रति मालाशेषं क्षिपतीत्यनेन पत्युर्नेत्रे स्थगयतीत्यनेन च प्रियनिरीक्षणेन लज्जाव्याकुलेति सूच्यते। अत्र व्रीडा नाम संचारी भावः। नायिका स्वीया मध्या च। नायकोऽनुकूलः। संभोगशृङ्गारः। चेष्टाकृतं सहास्यं शृङ्गारि नर्म। जातिरलंकारः।

(१) $D_2$, $D_3$ ०विच्छिन्नावशिष्टांशमित्यर्थः।; Mt ०विभिन्नशिष्टांशं (२) $D_6$ पुनःपुनः परीक्ष्यते (३) $D_3$ ०संदानितपदत्वात् अपसर्तुमेवं शक्तिर्नास्ति इति सूच्यते; $D_1$, $D_2$, चरणत्वात् अपसर्तुं अशक्ता (४) $D_6$,Bm मालां (५) $D_3$ लज्जाकुला; $D_6$ ०व्याकुलितेति (६) $D_1$ drops the sentence; $D_6$ drops सहास्यं

कवेर्वाक्यम्—

पराची कोपेन स्फुटकपटमुद्रामुकुलिता
प्रविश्याङ्गेनाङ्गं प्रणयिनि परीरम्भचतुरे।
शनैर्नीवीबन्धं स्पृशति सभयव्याकुलकरं
विधत्ते संकोचग्लपितमवलग्नं वरतनुः॥ ९०॥

(c) $D_6$ सभया व्या०

Averting her face in anger, her eyes closed in manifestly simulated sleep, the fair one makes her waist thinner by contracting it, when her lover, who was an adept in embraces locked each one of her limbs with his own, and gradually touched the knot of her garment with his hand which betrayed his fear and confusion! (90)

कोपेन प्रणयकोपेन पराची पराङ्मुखी स्फुटकपटनिद्रामुकुलिता कपटेन कृता निद्रा कपटनिद्रा स्फुटा प्रव्यक्ता तदैव प्रतिभासमानेत्यर्थः। सा चासौ

निद्रा तथा मुकुलिता निमीलिताक्षी सती[2] वरतनुः तन्वी अङ्गेन गात्रेण अङ्गं स्वस्य गात्रं प्रविश्य आसाद्य परीरम्भचतुरे आलिङ्गनकुशले प्रणयिनि प्रिये नीवीबन्धं वस्त्रग्रन्थिं समयन्त्याकुलकरं सभयो भयेन सहितः व्याकुलस्तरलः करो यस्मिन् कर्मणि तथोक्तम्। शनैर्मन्दं स्पृशति सति अवलग्नं मध्यं संकोचग्लपितं अंतराकर्षणकर्षितं विधत्ते करोतीति संबन्धः। अत्र कपटनिद्रयावलग्नसंकोचेन च नायिकाया विरहासहिष्णुत्वं व्यज्यते। औत्सुक्यं नाम संचारी भावः। नायिका स्वीया मध्या स्वाधीनपतिका च। नायकोऽनुकूलः। संभोगशृङ्गारः। कैशिकीवृत्तेरङ्गं नर्मगर्भः। युक्तिरलंकारः।

(१) $D_2$,$D_4$ Mg अतथ्या तथ्येव प्रतिभासमाना (२) $D_4$, adds तथ्येव प्रतिभासमानकपटनिद्रया मुकुलिताक्षी सतीत्यर्थः (३) $D_3$ ०दक्षे ; $D_4$ ०पटौ ; Mg ०चतुरे (४) $D_3$ प्रियतमे (५) $D_1$,$D_2$,$D_5$ अम्बराकर्षण० ; $D_3$ अन्तराकर्पितं ; $D_4$ अन्तराकरणकर्षितं

कवेर्वाक्यम् —

आदृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विश्रान्तेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियास्मिन्क्षणे
मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम्॥ ९१॥

(a) $D_2$ निर्विस्मया (c) $D_4$ Mg, Mt गत्वैकं (d) Bm ०वीक्षितः ; Mg ०वीक्ष (क्ष्य) ते

As far as the eye could reach, she scanned the path by which her lover was to come; but as the day declined and darkness crept apace, and the traffic on the roads ceased, her heart was filled with despair, and sadly she took but a single step homewards, and thinking, "Could he not have come this moment?" she quickly turned her neck and looked back again! (91)

आहष्टिप्रसरात् दृष्टिसंचारावधि प्रियस्य वल्लभस्य पदवीं मार्गं समुद्वीक्ष्य विलोक्य निर्विण्णया खिन्नया प्रियस्यानागमनेनेति शेषः । अहःपरिणतौ दिनावसाने ध्वान्ते तमसि समुत्सर्पति प्रसरति सति पथिषु विश्रान्तेषु विरतेषु सत्सु गतागतशून्येषु इत्यर्थः । सशुचा सखेदया पान्थस्त्रिया पान्थस्य प्रोषितस्य स्त्री वनिता तया गृहं प्रति गृहमुद्दिश्य एकं पदं दत्त्वा विन्यस्य अस्मिन् क्षणे तत्काल एवागत आयातो मा भूदिति नासीदिति प्रिय इति शेषः । अत्र मा इति प्रतिषेधे निपातः न माङ् । माङ् भवतीति चेत् माङि लुङित्याशीः प्रसज्येत । सा त्वत्र न युक्ता । मा भूदित्यत्र काकुरनुसंधेया । अमन्दवलितग्रीवं शीघ्रवर्तितकन्धरं यथा भवति तथा पुनर्वीक्षितं पुनर्विलोकितमिति संबन्धः । अस्मिन्क्षणे मा भूदागत इत्यनेन पुनर्वीक्षणेन औत्सुक्यातिशयः सूचितः । अत्र नायिका स्वीया मध्या च । किं च प्रोषितभर्तृका । 'देशान्तरगते कान्ते खिन्ना प्रोषितभर्तृका' इति । नायकोऽनुकूलः । प्रवासविप्रलम्भशृङ्गारः । अत्र चेष्टाकृतं संगेच्छारूपं शृङ्गारि नर्म । जातिरलंकारः ।

(१) $D_6$ ०संचारावधिं (२) $D_2$,$D_5$,Mg add मार्गेषु (३) $D_4$,Mg,Mt गत्वा (४) $D_1$,$D_5$ नायासीदिति; Mg नास्ति किल प्रिय इति (५) $D_1$,$D_2$ drop the definition; Mg has यथोक्तं भारतीये before it

कवेर्वाक्यम्—

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै—
यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणाग्ररुद्धवसुधः प्रोन्मृज्य सास्रे दृशौ
तामाशां पथिकस्तथैव किमपि ध्यायन्मुहुर्वीक्षते ॥९२॥

(c) $D_4$ ०चरणाग्रलग्न० (d) $D_4$ पुनर्वीक्षते

The wanderer knows full well that between him and his beloved there lie many lands, and hundreds of rivers and mountains and forests, and that by no effort of his can he ever get a glimpse of her; nevertheless, he stretches his

neck high, stands tip-toe, and drying his tear-filled eyes, looks again with wistful longing in that direction. (92)

देशैर्विषयैः सरितां नदीनामुर्वीभृतां पर्वतानां शतैः समूहैः काननैररण्यैश्च अन्तरिता व्यवहिता कान्ता प्रिया यत्नेनाप्युपायेनापि लोचनपथं दृष्टिमार्गं न याति न प्राप्नोतीति जानन् विदन्नपि पथिकः प्रोषित उद्ग्रीवं उन्नमितकन्धरो भूत्वा चरणाग्ररुद्धवसुधः पादाग्रावष्टब्धभूमिः सन् सास्रे सबाष्पे दृशौ नेत्रे प्रोन्मृज्य परिमृज्य तथैव तथाभूत एव किमपि यत्किञ्चिद् ध्यायन् चिन्तयन् तामाशां यत्र प्रिया स्थिता तां दिशं मुहुः पुनःपुनः वीक्षते पश्यतीति संबन्धः । औत्सुक्यं नाम संचारी भावः । नायिका स्वीया मध्या च । नायकोऽनुकूलः । जातिरलंकारः ।

(१) Mg,Bm drop उपायेनापि (२) $D_4$ जानानोऽपि; Bm,Mg drop विदन्नपि (३) $D_3$ explains प्रिययोषितो दिशं; $D_1$,$D_2$,Mg add व्यक्त एव अभिप्रायः after this (४) $D_1$,$D_2$,$D_4$,$D_5$ and Mg, Mt drop नायिका स्वीया......०नुकूलः। (५) $D_3$ adds किं च प्रोषितभर्तृका

नायकमानेतुं प्रेषिताया लक्ष्यमाणसंभोगचिह्नाया दूत्या नायिकायाश्च प्रश्नोत्तररूपा वाक्यमाला—

स्विन्नं केन मुखं दिवाकरकरैस्ते रागिणी लोचने
रोषात्तद्वचनोदिताद् विलुलिता नीलालका वायुना ।
भ्रष्टं कुङ्कुममुत्तरीयकषणात्क्लान्तासि गत्यागतै-
र्युक्तं तत्सकलं किमत्र वद हे दूति क्षतस्याधरे ॥९३।

(a) $D_1$,$D_2$ खिन्नं (b) $D_3$ ०वचनोत्थिताद् (c) $D_4$,Mg मृष्टं कुङ्कुम० (d) Mg मे दूति

"What brings this perspiration to your face?" "Ah! it is the rays of the sun;" "What makes your eyes red?" "Anger caused by his words;" "But the dark tresses of your hair are dis hevelled;" "Sure, it is the wind that

makes them so;" "What has wiped out the saffron-mark on your forehead?" "It is rubbed away by the upper garment." "Well have you answered all those (questions); but tell me, Oh messenger, what have you to say to the wound on your lower lip?" (93)

हे दूति तव मुखं केन कारणेन स्विन्नं सस्वेदं जातम् । अयं नायिकायाः प्रश्नः । दिवाकरकरैः स्विन्नमिति दूत्या उत्तरमुक्तम् । ते तव लोचने दृशौ केन रागिणी रक्ते । अयं नायिकायाः प्रश्नः । तद्वचनोदितात् तस्य धूर्तस्य वचनं वाक्यं तस्मादुदितात् उद्भूतात् तस्माद्रोषाद् रक्ते इत्युत्तरम् । नीलालकाः केन विलुलिताः व्याकुलिताः । अयं नायिकाप्रश्नः । वायुना विलुलिताः । इदमुत्तरं दूत्याः । कुङ्कुमं कश्मीरं केन भ्रष्टं गलितम् । अयं नायिकाप्रश्नः । उत्तरीयकषणात् संव्यानघर्षणादित्युत्तरं दूत्याः । केन क्लान्तासि तान्ता भवसि इति प्रश्नः । गत्यागतैर्गमनागमनैः क्लान्तास्मि इत्युत्तरं दूत्याः । हे दूति तत्सकलं त्वया यदुक्तं तत्सर्वं युक्तमुपपन्नम् । अधरे क्षतस्य व्रणस्य किं कारणम् । अत्रास्मिन् प्रश्ने वद ब्रूहि उत्तरमिति शेषः । इति संबन्धः । अत्र वदेत्यनेन त्वया वैदग्ध्यात्सर्वं संभोगचिह्नमपह्नुतमधरे क्षतं कथमपह्नूयत इत्ययमर्थो गम्यते । नायिका स्वीया प्रगल्भा च । नायकः शठः । विप्रलम्भशृङ्गारः । वाकोवाक्यमलंकारः । उक्तिप्रत्युक्तिमद्वाक्यं वाकोवाक्यमिति स्मृतम् ।

(१) $D_3$ प्रश्नोत्तररूपं वाक्यं (२) $D_3$ स्वेदजलमयं Mt,Mg स्वेदयुक्तं; $D_1$,$D_2$ खिन्नं खेदयुक्तं (३) $D_1$,$D_2$,$D_4$,$D_5$,Bm, Mt,Mg drop नायिकायाः and दूत्याः here and subsequently (४) $D_5$ श्रान्ता (५) $D_3$ कथमपह्नविष्यसि इत्यर्थः सूचितः (६) $D_3$,$D_4$,$D_6$,Mg drop this definition; Mt drops वाकोवाक्यम and this definition.

नायको नायिकां सान्त्वयन्नाह--

कठिनहृदये मुञ्च भ्रान्तिं व्यलीककथाश्रयां
पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम् ।

**किमिदमथवा सत्यं मुग्धे त्वयाद्य विनिश्चितं**
**यदभिरुचितं तन्मे कृत्वा प्रिये सुखमास्यताम् ॥ ९४ ॥**

(a) $D_5$ •कथाश्रितां ; $D_2$ चपलहृदये

Oh hard-hearted one, cast off thy suspicions resting upon (false) reports about my misdemeanour. It is not proper that thou shouldst make me miserable by lending thy ears to the words of wicked informers; or, Oh simple one, dost thou, now, consider it really true? Then do me, my beloved, what thou likest and be happy. (94)

हे कठिनहृदये निष्ठुरचित्ते व्यलीककथाश्रयां मिथ्यावचनान्याश्रयोऽधिकरणं यस्याः सा तथोक्ता तां भ्रान्तिं मिथ्यामतिं मुञ्च त्यज । पिशुनवचनैर्दुर्जनभाषितैरिमं जनं मामित्यर्थः । दुःखं नेतुं क्लेशं प्रापयितुं न युक्तं नार्हम् । अथवा हे मुग्धे[४] त्वयाद्येदानीमिदं प्रकृतं कर्म सत्यं यथार्थं यथा भवति तथा विनिश्चितं किं निर्णीतं किमु । किंशब्दः प्रश्ने । हे प्रिये यदभिरुचितं यदिष्टं तन्मे मम कृत्वा विधाय सुखं यथा भवति तथास्यतां स्थीयतामिति संबन्धः । अत्र कठिनहृदये मुग्धे प्रिये इत्यामन्त्रणबाहुल्येन क्रमेण सान्त्वेन दैन्यं सूच्यते । अत्र नायिका स्वीया मध्या च । ईर्ष्यामानकृतो विप्रलम्भशृङ्गारः। सोपालम्भवचनं नर्म । आक्षेपोऽलंकारः ।

(१) $D_3$ अपराधी नायको नायिकां प्रसादयितुमशक्तः सन्नाह ; $D_1, D_2, D_5$ नायकोक्तिः (२) $D_1, D_2, D_3$ व्यलीकं अनृतं आश्रयमधिकरणं यस्या सा तथोक्ता ; Mg व्यलीककथाः मिथ्यावचनानि आश्रयं अधिकरणं यस्याः सा । (३) $D_1, D_2$ सूचकोक्तिभिः (४) $D_1, D_2, D_3$, Mg, Mt explain मूढे (५) $D_3$ मुग्धा ; $D_5$ प्रगल्भा ; $D_2$ adds नायकः शठः

मानपरिग्रहाय सख्या प्रोत्साहिता नायिका तां प्रत्याह—

**भ्रूभेदो गुणितश्चिरं नयनयोरभ्यस्तमामीलनं**
**रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः ।**

धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथंचिन्मया
बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थिता ॥९५॥

The brows I have knitted for a long time; and so have I practised the closing of the eyes; I have also learnt with effort how to avoid smiling; I have attempted to keep mum and in order to show firmness, I have striven to steel my heart with great effort: thus everything is ready for the display of my resentment; and yet success depends upon *fate. (95)*

भ्रूभेदो भ्रूभङ्गश्चिरं गुणित आम्नातः । नयनयोर्नेत्रयोरामीलनं ईषन्मुकुलनं अनादरदृष्टिरित्यर्थः । अभ्यस्तमावर्तितम् । आदरेण प्रीत्या जायमानं हसितं रोध्दुं निवारयितुं शिक्षितं शीलितम् । मौने अभाषणे अभियोग आस्था कृतो निर्वर्तितः । इदं चेतोऽपि धैर्यं कर्तुं धैर्यकरणाय स्थिरीकृतं स्थिरत्वं नीतम् । एवं मया मानपरिग्रहे कोपपरिग्रहे परिकरः सामग्री कथंचित् कृच्छ्रेण बद्धः सन्नद्धः । सिद्धिस्तु निर्वाहणं तु दैवे भागधेये स्थितेति संबन्धः । नायिका स्वीया मुग्धा च । नायकः शठः । आत्मोपक्षेपरूपं शृङ्गारि नर्म । आक्षेपोऽलंकारः ।

( १ ) Mg मानपरिग्रहणाय सखीभिः प्रोत्साहिता नायिका ताः प्रत्याह ( २ ) $D_3$ आवर्तितः ( ३ ) $D_1$,$D_2$ drop अनादरदृष्टिः ( ४ ) $D_1$,$D_2$ have अनारतं before अभ्यस्त० ( ५ ) Mg, Mt explain स्मितं ( ६ ) $D_4$ कोपग्रहणे ( ७ ) $D_1D_2$,$D_3$,Mg निर्वहणं तु ( ८ ) $D_3$,$D_4$ Bm मध्या च

मानं कुरुष्व तत्र गुणोऽस्तीति सख्या बोधिता नायिका तां प्रत्याह—

चरणपतनं सास्त्रालापा मनोहरचाटवः
कृशतरतनोर्गाढाश्लेषो हठात्परिचुम्बनम् ।
इति बहुफलो मानारम्भस्तथापि च नोत्सहे
हृदयदयितः कान्तः कामं किमत्र करोम्यहम् ॥ ९६ ॥

( a ) $D_3$,$D_5$ मनोहरपाटवं ( b ) O हठात् कृतचु० ( c ) $D_5$ इति हि चपलो ( d ) $D_5$ हृदयगमितः

**Prostration, tearful conversation, sweet blandishments, close embraces of the body grown thinner, and passionate *kisses* — *thus the assumption of anger bears manifold fruit;* and yet I dare not do it; for my husband is very dear to my heart; what can I do? (96)**

चरणपतनं पादप्रणामः साम्रालापाः सबाष्पभाषितानि दीनवचनानीत्यर्थः। मनोहरचाटवः अत्यन्तप्रियोक्तयः। कृशतरतनोः क्षीणगात्रस्य प्रियस्य गाढाश्लेषः दृढपरिरम्भः। कर्तृकर्मणोः कृतीति कर्तरि षष्ठी। प्रियेण भर्त्रा कृत आश्लेषो हठाद् बलात्कारात्। प्रसभं तु बलात्कारो हठ इत्यमरः। परिचुम्बनं चेत्यनेन प्रकारेण मानारम्भः कोपोद्योगो बहुफलः अनेकप्रयोजनस्तथापि च नोत्सहे नोद्युक्तास्मि। यतः कान्तः कामसमत्यर्थं हृदयदयितो मनोवल्लभः अतो नोत्सहे इति योजनीयम्। अत्रास्मिन् प्रसङ्गे अहं किं करोमि किमाचरामीति संबन्धः। बहुफलो मानारम्भ इत्यत्र सखीवचनानुरोधात् मानारम्भे बहुफलत्वमङ्गीकृतं न स्वत इत्यनुसंधेयम्। तथापि नोत्सह इत्यनेनात्मनोऽशक्तिः सूचिता। किमत्र करोमीत्यनेन इतःपरं भवत्या यदुपदिश्यते तत्करोमीत्ययमर्थोऽवगन्तव्यः। नायिका स्वीया मध्या च। नायकः शठः। विप्रलम्भशृङ्गारः। आत्मोपक्षेपरूपं शृङ्गारि नर्म। हेतुरलंकारः।

( १ ) $D_6$,$D_5$ मनोहरपाटव ( २ ) $D_1$ $D_5$ Bm, Mg कर्त्रा ( ३ ) $D_4$ रोषोद्योगः ( ४ ) $D_3$ प्राणनायकः ( ५ ) $D_3$ बहुफलमुरीकृतं न स्वतन्त्रं ( ६ ) $D_4$ adds अनुकूलो वा

नायिका सखीमाह—

कान्ते तल्पमुपागते विगलिता नीवी स्वयं तत्क्षणात्
तद्वासः श्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम्।
एतावत्सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं तु किं कथमिति स्वल्पापि मे न स्मृतिः ॥९७॥

( a ) O स्वयं बन्धनात् ( b ) $D_5$ वासो विश्लथमेखला॰ ( c ) Mg मुहुः ; $D_5$ सांप्रतमहं ( d ) $D_4$ रतं नु ; $D_5$ रतं तु वा कथ॰; Mg रतं च कीदृशमिति

When the husband came to the bed, the knot of the garment released of itself instantly; and the garment, too, held by the loosened girdle, slightly covered the hips; this is all I remember now; but once locked in his embrace, I do not recollect even faintly who he was, who was I, or how was the love-dalliance. (97)

कान्ते प्रिये तल्पं शय्यामुपागते प्राप्ते सति नीवी वस्त्रग्रन्थिः तत्क्षणात्तत्काल-मात्रात्स्वयमात्मना विगलिता स्रस्ता । तद्वासः शिथिलितनीवीकं वस्त्रं श्लथमेखलागुणधृतं शिथिलितकाञ्चीसूत्रधारितं सन् नितम्बे कटिप्रदेशे किंचिदी-षत्स्थितम् । हे सखि अहं केवलमेतावत्पूर्वोक्तमियदेव वेद्मि जानामि । तस्य प्रियस्याङ्गसङ्गे पुनः गात्रस्पर्शे तु असौ कः अहं कास्मि रतं च किंरूपमिति स्वल्पापि स्मृतिर्न कथं कुतो हेतोरिति संबन्धः । जाड्यं नाम संचारी भावः । यथोक्तं दशरूपके— जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टेक्षणादिभिरिति । नायिका स्वीया मध्या स्वाधीनपतिका च । नायकोऽनुकूलः । संभोगशृङ्गारः । आत्मो-पक्षेपरूपं शृङ्गारि नर्म । जातिरलंकारः ।

( १ ) $D_3$ कवेर्वाक्यं ( २ ) $D_2$ शिथिलितनीविवस्त्रं ; $D_3$ तस्या नीव्या वासो वस्त्रं ( ३ ) $D_2$,$D_1$,$D_4$,$D_5$ शिथिल॰; Mg शिथिलीकृत॰ ( ४ ) $D_3$ कीदृग्रूपं ; Mg कीदृशरूपं ( ५ ) $D_4$ has before this किं च अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः । अनिमिषनयननिरीक्षणतूष्णीं-भावादयस्तस्येति ॥ दशरूपके च

सखीनां प्रेरणया गृहीतमानानुनयन्तं प्रियं निरस्य पश्चात्तापं गतवती नायिका ता उपालभते—

**निश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मूल्यते**
**निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिवं रुद्यते ।**
**अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथोपेक्षितः**
**सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥९८॥**

My deep sighs scorch my face, my heart is torn right up from the roots; sleep has deserted me; the sweet face of the loved one is not seen; night and day I weep; and my limbs dry up. How did I despise my lover in that way, even when he fell at my feet? Friends, what merit had you in mind, that you made me assume anger towards my lover? (98)

हे सख्यः यस्मात्पादपतितः प्रेयांस्तया तेन प्रकारेणोपेक्षितोऽनादृतस्तस्मान्निश्वासा वदनं मुखं दहन्ति शोषयन्ति । हृदयं हृत्पुटं निर्मूलं निरवशेषमुन्मूल्यते उत्पाट्यते संतापेनेति शेषः । निद्रा नैति न प्राप्नोति । प्रियमुखं न दृश्यते नक्तंदिवं रात्रिंदिवं रुद्यते अश्रुमोचनं क्रियते । अङ्गं शोषमुपैति । हे सख्यः कं गुणं किं प्रयोजनमाकलय्य विचार्य दयिते प्रिये वयं मानमीर्ष्याकोपं कारिता ग्राहिता भवतीभिरिति शेष इति संबन्धः । संज्वरो नाम दशाविशेषः । नायिका स्वीया मुग्धा च । किं च कलहान्तरिता । नायकः शठः । विप्रलम्भशृङ्गारः । अत्र विप्रलम्भकृतं सोपालम्भवचनं नर्म । आक्षेपोऽलंकारः ।

( १ ) $D_2, D_8$ सखीनां प्रेरणया गृहागतं प्रणमन्तं प्रियं निरस्य पश्चात्तापं गता नायिकामुपालभते ; Mt गृहागतं अनुनयन्तं प्रियं निरस्य etc. ( २ ) $D_8$ पादप्रणतः सन् किमुपेक्षितः किमर्षमनादृतः तस्मान्निश्वासा वदनं दहन्ति ( ३ ) $D_1, D_2, D_5$ उद्घाट्यते ; $D_4$ उत्खाद्यते

अत्यन्तापराधिनि प्रिये समागते सति कुपिताया नायिकाया आकारगोपनप्रकारं कविराह—

नान्तःप्रवेशमरुणद्विमुखी न चासी—
दाचष्ट रोषपरुषाणि न चाक्षराणि ।
सा केवलं सरलपक्ष्मभिराक्षिपातैः
कान्तं विलोकितवती जननिर्विशेषम् ॥ ९९ ॥

( c ) Oa °भिरश्रुपातैः

She did not bar his entry into the house, nor did she avert her face, nor speak harsh, angry words; only with

glances of her eyes with their straight eye-lashes, did she look at her husband as she would at any other ordinary person. (99)

सा नायिका नायकस्यान्तःप्रवेशं स्वगृहान्तःप्रवेशं नारुणत् न निवारयति स्म। किंच विमुखी पराङ्मुखी च नासीत् । किं च रोषपरुषाणि कोपकर्कशान्यक्षराणि वचनानि नाचष्ट नाभाषत । किं तु सरलपक्ष्माभिः सरलानि ऋजूनि पक्ष्माण्यक्षिरोमाणि येषु ते तथोक्तास्तैरक्षिपातैः संदर्शनैः कान्तं प्रियं जननिर्विशेषं सर्वजनसामान्यं यथा भवति तथा केवलं विलोकितवती दृष्टवत्यैवेति शेष इति संबन्धः । जननिर्विशेषं विलोकितवतीत्यनेनापराधिनः प्रियस्यासाधारणं दण्डनं क्रियत इत्यवगम्यते । अवहित्थं नाम संचारी भावः । नायिका स्वीया धीरा प्रगल्भा च । नायकः शठः । ईर्ष्यामानकृतो विप्रलम्भशृङ्गारः । ईर्ष्याक्रोधप्रायं नर्म । आक्षेपोऽलंकारः ।

(१) $D_4$ आकारगोपनं (२) $D_3$ विलासशून्यानि (३) $D_3$ ०जनसमानं (४) $D_3$ ०साधारणो दण्डः कृतः; $D_1$,$D_2$ अनादरणं ; $D_4$ असाधारणदण्डं कृतवतीत्यभिप्रायः

कवेर्वाक्यम्—

प्रियकृतपटस्तेयक्रीडाविलम्बनविह्वलां
किमपि करुणालापां तन्वीमुदीक्ष्य ससंभ्रमम् ।
अपि विगलिते स्कन्धावारे गते सुरताहवे
त्रिभुवनमहाधन्वी स्थाने न्यवर्तत मन्मथः ॥१००॥

(a) $D_2$ ०विडम्बन ०; $D_6$ ०विलम्बित० (c) O ०ते प्रेमावेशे ; T स्कन्धाधारे

The God of love, seeing the fair one distressed on account of delay caused by the playful stealth of her garments by her lover, and crying piteously in a manner that beggared description, quickly returned to the fray—this greatest archer in the three worlds—even when the camp was broken, and the battle of love-play had ended. (100)

प्रियकृतपटस्तेयक्रीडाविलम्बनविह्वलां प्रियेण कृता प्रियकृता सैव पटस्तेयक्रीडा पटस्य वस्त्रस्य स्तेयं चौर्यं तदेव क्रीडा विनोदस्तस्य विलम्बनं कालक्षेपस्तेन विह्वला व्याकुला तां किमपि करुणालापामनिर्वाच्यदीनभाषितां तन्वीं कान्तामुदीक्ष्यावगम्य त्रिभुवनमहाधन्वी त्रैलोक्यैकवीरः मन्मथः कामः सुरताहवे संभोगसमरे गते निवृत्ते सति स्कन्धावारे शिबिरे विगलिते च्युते सत्यपि ससंभ्रमं सत्वरं यथा भवति तथा न्यवर्तत निवृत्तोऽभूत् स्थाने युक्तमिति संबन्धः । अत्र पटस्तेयक्रीडा संभोगावसाने कृतेति वेदितव्या गते सुरताहवे इत्युक्तत्वात् । सुरतस्याहवत्वनिरूपणं परस्परोपमर्दस्य विद्यमानत्वात् । अत्र स्कन्धावारशब्देन स्रक्चन्दनादिप्रसाधनहारमेखलाद्याभरणलीलाविलासविभ्रमादिचेष्टास्वरूपोद्दीपनसामग्री कथ्यते । विगलित इत्यनेन सुरतान्ते लक्ष्यमाणं सामग्रीशैथिल्यं कथ्यते । न्यवर्तत मन्मथ इत्यनेन पुनः सुरतारम्भो गम्यते । यथा लोके शूरः पुरुषः परान् निर्जित्य गलितसन्नाहः प्रयातः सन् पश्चात्परैरभिभूतानां स्वकीयानामार्तनादं श्रुत्वा तत्प्रशमनाय पुनर्निवर्तते तद्वदयमपीत्यभिप्रायः । अत्र व्रीडा नाम संचारी भावः । नायिका स्वीया मध्या स्वाधीनपतिका च । नायकोऽनुकूलः । संभोगशृङ्गारः । चेष्टाकृतं सहास्यं शृङ्गारि नर्म । हेतुरलंकारः ।

(१) $D_5$ ॰भाषिणीं (२) $D_4$,Mg ॰निरूपणं तत्र परस्परो॰ (३) $D_2$ यः कश्चन राजा (४) $D_3$ ॰संपातः (५) $D_2$ परैराहूतः स्वकीयानां (६) Mg स्वीया मध्या च । किं च स्वाधीनपतिका च

कवेर्वाक्यम्—

> सालक्तकेन नवपल्लवकोमलेन
>   पादेन नूपुरवता मदलालसेन ।
> यस्ताड्यते दयितया प्रणयापराधात्
>   सोऽङ्गीकृतो भगवता मकरध्वजेन ॥ १०१ ॥

(c) $D_3$ यस्ताडितो दयितया प्रणयप्रकोपात् ।

Whosoever, sinning in love, is struck by the beloved with her foot, with lac dye on, tender as a young sprout, clasped with an anklet, and languid through passion, him the divine God of love marks as his own! (101)

इत्यमरुशतकमूलं समाप्तम् । स्पष्टोऽर्थः । अत्र दयितया पादेन ताडितोऽपि स भगवता मकरध्वजेनाङ्गीकृत इत्यनेन नानाविधैरुपचारैरुपलालितः किमुते[2]-त्ययमर्थः सूचितः । एतावता कामपुरुषार्थस्योपादेयत्वमुक्तं भवति ।

( १ ) $D_1$,$D_2$,$D_3$,Mg,Mt,Bm drop the sentence ( २ ) $D_1$, $D_2$,$D_3$ किमुच्यते इत्ययमर्थः । ( ३ ) $D_3$ सर्वेषामुपादेयत्वमुक्तं

इति श्रीवीरनारायणसकलविद्याविशारदपेद्दकोमटिवेमभूपालविरचिता शृङ्गारदीपिका समाप्ता ।

( १ ) $D_1$ श्रीवीरनायक० ( २ ) Mt शृङ्गारदीपिकाख्या अमरुकव्याख्या समाप्ता । $D_1$ शृङ्गारदीपिकाटीका

## APPENDIX A. Western Recension
### [ Simon's III recension ]

The text of Arjunavarmadeva excludes the following verses from the text of Vemabhūpāla :—

(१) नभसि जलदलक्ष्मीं॰ (२) स्मररसनदी॰ (३) निःशेषच्युतचन्दनं॰ (४) आयस्ता कलहं॰ (५) काचित्ताम्बूलाक्तः॰ (६) पुष्पोद्भेदमवाप्य॰ (७) शठान्यस्याः काञ्ची॰ (८) अच्छिन्नं नयनाम्बु॰ (९) रोहन्तौ प्रथमं॰ (१०) पराची कोपेन॰ (११) स्विन्नं केन मुखं॰ (१२) नान्तःप्रवेशम॰ (१३) प्रियकृतपटस्तेय॰ (१४) सालक्तकेन नव॰

Vemabhūpāla excludes the following 15 stanzas included by Arjunavarmadeva .—

धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं
दीर्घोच्छ्‌वासमुदश्रुणा विरहिणीं बालां चिरं ध्यायता ।
अध्वन्येन विमुक्तकण्ठमखिलां रात्रिं तथा क्रन्दितं
ग्रामीणैः पुनरध्वगस्य वसतिर्ग्रामे निषिद्धा यथा ॥ १ ॥

मलयमरुतां व्राता वाता विकासितमल्लिका-
परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि ।
घन घटयितुं तं निःस्नेहं य एव निवर्तने
प्रभवति गवां किं नश्छिन्नं स एव धनञ्जयः ॥ २ ॥

सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥ ३ ॥

पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः
प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः ।
स्फुटो रेखान्यासः कथमपि स तादृक्परिणतो
गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ॥ ४ ॥

ततश्चाभिज्ञाय स्फुरदरुणगण्डस्थलरुचा
मनस्विन्या रूढप्रणयसहसोद्गद्गदगिरा ।
अहो चित्रं चित्रं स्फुटमिति निगद्याश्रुकलुषं
रुषा ब्रह्मास्त्रं मे शिरसि निहितो वामचरणः ॥ ५ ॥

न जाने संमुखायाते प्रियाणि वदति प्रिये
सर्वाण्यङ्गानि किं यान्ति नेत्रतां किमु कर्णताम् ॥ ६ ॥

अनल्पचिन्ताभरमोहनिश्चला विलोक्यमानैव करोति साध्वसम् ।
स्वभावशोभानतिमात्रभूषणा तनुस्तवेयं बत किं न सुन्दरि ॥७॥

इति प्रिये पृच्छति मानविह्वला कथञ्चिदन्तर्धृतबाष्पगद्गदम् ।
न किञ्चिदित्येव जगाद यद्वधूः कियन्न तेनैव तयास्य वर्णितम् ॥८॥

यास्यामीति समुद्यतस्य गदितं विस्रब्धमाकर्णितं
गच्छन् दूरमुपेक्षितो मुहुरसौ व्यावृत्य तिष्ठन्नपि ।
तच्छून्ये पुनरास्थितास्मि भवने प्राणास्त एते दृढाः
सख्यस्तिष्ठत जीवितव्यसनिनी दम्भादहं रोदिमि ॥ ९ ॥

जाता नोत्कलिका स्तनौ न लुलितौ गात्रं न रोमाञ्चितं
वक्त्र स्वेदकणान्वितं न सहसा यावच्छठेनामुना ।
दृष्टेनैव मनो हृतं धृतिमुषा प्राणेश्वरेणाद्य मे
तत्केनात्र निरूप्यमाणनिपुणो मानः समाधीयताम् ॥ १० ॥

तप्ते महाविरहवह्निशिखावलीभि-
रापाण्डुरस्तनतटे हृदये प्रियायाः ।
मन्मार्गवीक्षणनिवेशितदीनदृष्टे-
र्नूनं छमच्छमिति बाष्पकणाः पतन्ति ॥ ११ ॥

सैवाहं प्रमदा नृणामधिगतावेतौ च तौ नूपुरा-
वेषास्माकमवृत्तिरेव सहजव्रीडाधनः स्त्रीजनः ।
इत्थं लज्जितया स्मृतेरुपगमे मत्वा तनुं संभ्रमा-
त्पुंभावः प्रथमं रतिव्यतिकरे मुक्तस्ततो वल्लभः ॥ १२ ॥

